# ॥ अथ सर्वार्थचिंतामणिप्रारंभः ॥



श्रीगणेशाय नमः ॥ श्रीवेंकटनायकाय नमः ॥ अथ सर्वार्थचिन्तामणिः प्रारभ्यते ॥
श्रीमच्छेषगिरेस्तटाधिनिलयं श्रीवेंकटेशं गुरुं नत्वा वेंकटनायकं त्वनुदिनं जातोऽहमार्या-
त्सुधीः ॥ ज्योतिःशास्त्रमहाब्धिपारगमने वक्ष्यामि पोतात्मकं ज्योतिःशास्त्रविवेकपाकविदुषां
सर्वार्थचिंतामणिम् ॥ १ ॥ नीलांबुजरुचिं देवं सकृद्यांति मनोरथम् ॥ देवाः प्रणम्य यं सर्वे तं
नमामि गजाननम् ॥ २ ॥ वाग्विभूतिप्रदा देवी या श्वेतांबुरुहस्थिता ॥ गोक्षीरधवलाकारा
स्वयं तिष्ठतु वाचि मे ॥ ३ ॥ मेषादिराशयः सर्वे दिनेशप्रमुखा ग्रहाः ॥ ये च लोकोपकर्तारः
पांतु मामिह ते सदा ॥ ४ ॥ यज्जातके निगदितं भुवि मानवानां तत्प्राश्निकेऽपि सकलं
कथयंति तज्ज्ञाः ॥ प्रश्नोऽपि जन्मसदृशो भवति प्रभेदः प्रश्नस्य चात्र जननस्य न किंचिद-
स्ति ॥ ५ ॥ भौमाच्छविच्चंद्ररविज्ञशुक्रवक्रेज्यमंदार्कसुतामरेज्याः ॥ मेषादिभानामधिपाः
क्रमेण तदंशकानामपि ते भवेयुः ॥ ६ ॥ मेषादि मूर्धा वदनं गलोरो हृत्कुक्षिवासोभृतबस्तिगु-
ह्यम् ॥ तंतोरुजानुद्वयजंघमंघ्री पापान्वितं यत्तदुपैति नाशम् ॥ ७ ॥ व्यत्यस्तमत्स्यद्वयमश्व-
जंघश्चापी मनुष्यः सगदं सवीणम् ॥ नृयुग्ममादाय करेऽग्निसस्ये नौस्थाबला मानधरो वणिक्

+ पादपूर्त्तयेऽत्र संधिर्ज्ञातव्यः ।

च ॥ ८ ॥ घटीजलादानग्रहीतुकामः शेषाः स्वनामानुगुणा भवंति ॥ मेषस्तु मेषो वृषभः स एव
कर्की कुलीरस्त्वथ वृश्चिकोऽलिः ॥ ९ ॥ राशिं त्रिधा कृत्य दृकाणमाहुस्तदीशपुत्रेशशुभा-
धिनाथाः ॥ युजींदुसूर्यौ भवने रवींदू नाथौ त्वयुग्मे भवनस्य चार्धे ॥ १० ॥ चरेंशकानाम-
धिपास्तदीशाद्राशौ स्थिरे तन्नवमेश्वराद्याः ॥ द्विदेहभे तत्सुतराशिनाथाद्वदंति शास्त्रार्थविदो
महांतः ॥ ११ ॥ तत्क्षेत्रपाद्वादशभागनाथा लग्नस्य वर्गाधिपतिस्तदीशात् ॥ त्रिंशांशपा
भौमशनीज्यसौम्यशुक्रा भवंत्योजगृहे समे तु ॥ १२ ॥ विलोमतः पंचशराष्टसप्तबाणाः क्रमा-
दूचुरनेकशास्त्रैः ॥ सप्तांशपास्त्वोजगृहे तदीशाद्युग्मे गृहे सप्तमराशिपात्तु ॥ १३ ॥ दशांशपाना-
मधिपास्तदीशादोजे समे तन्नवमेश्वराद्याः ॥ ओजे कलानामधिपास्तदीशाश्चतुर्मुखोविष्णुहरौ
दिनेशः ॥ १४ ॥ युग्मे क्रमाद्व्यत्ययमेवराशौ षष्ट्यंशकानामधिपास्त्वयुग्मे ॥ घोरांशको राक्ष-
सदेवभागौ कुबेररक्षोगणकिंनरांशाः ॥ १५ ॥ भ्रष्टः कुलघ्नो गरलाग्निसंज्ञौ मायांशकः प्रेतपुरी-
शभागः ॥ अपांपतिर्देवगणेशभागः कालाहिभागावमृतांशुचंद्रौ ॥ १६ ॥ मृद्वंशकः कोमल-
पद्मभागौ लक्ष्मीशवागीशदिगंबरांशाः ॥ दिवार्द्रभागौ कलिनाशभागः क्षितीश्वरांशः कमलाक-

+ चरेऽजाद्याः स्थिरे सिंहाद्याः द्विस्वभावे चापाद्याः षोडशांशाः । * स्वभात् षष्ट्यंशाः ।

रांशः ॥ १७ ॥ क्रमेण मंदात्मजमृत्युकालदावाग्निघोराममयकंटकाश्च ॥ सुधामृतांशौ परिपूर्ण-
चंद्रविषप्रदग्धौ कलिनाशमुख्यौ ॥ १८ ॥ वंशक्षयोत्पातककालरूपाः सौम्यश्च मृदंशसुशीत-
लांशौ ॥ दंष्ट्राकरालेंदुमुखप्रवीणाः कालाग्निदंडायुधनिर्मलांशाः ॥ १९ ॥ शुभाशुभांशावति-
शीतलांशः सुधापयोधिभ्रमणेंदुरेखाः ॥ ज्ञेयाः क्रमाद्व्यत्ययमेव युग्मे शुभान्वितांशो यदि
शोभनोऽस्ति ॥ २० ॥ क्रूरषष्ट्यंशगाः सर्वे नाशयंति खचारिणः ॥ परिपूर्णबलैर्युक्ता स्वोच्चमू-
लत्रिकोणगाः ॥ २१ ॥ स्वर्क्षकेंद्रोत्तमांशस्था मित्रक्षेत्रत्रिकोणगाः ॥ सप्तवर्गोद्भवाः स्वांशाः
स्वाधिमित्रांशकान्विताः ॥ २२ ॥ वर्गास्तु ये दश प्रोक्ताः पूर्वाचार्यैर्महर्षिभिः ॥ भवंति वर्गसंयोगे
पारिजातादिसंज्ञकाः ॥ २३ ॥ दुःस्थारिनीचमूढस्था ग्रहा बलविवर्जिताः ॥ मरणावस्थगाश्चेत्तु
पारिजातादिनाशकाः ॥ २४ ॥ *अयं पक्षो नादरणीयः । मुख्यपक्षस्तु स्वत्र्यंशे स्वनवांशके
स्वभवन इति ग्राह्यः ॥ उत्तमं तु त्रिवर्गैक्यं चतुर्वर्गे तु गोपुरम् ॥ वर्गपंचकसंयोगे सिंहासनमि-
होच्यते ॥ २५ ॥ वर्गद्वयं पारिजातः षण्णां पारावतांशकः ॥ सप्तमं देवलोकः स्याद्दष्टमं च

+ राशिहोराद्रेष्काणत्रिंशांशनवांशद्वादशांशसप्तमांशदशांशषोडशांशषष्ट्यंशा दश वर्गाः । * ग्रंथांतरे—मूलत्रिको-
णस्वगृहोच्चभागा वर्गोत्तमानां दशवर्गजानाम् । ते पारिजातोत्तमनामपूर्वा वैशेषिकांशा इति वै वदंति ॥

तथा भवेत् ॥ २६ ॥ ऐरावतं तु नवमं फलं तेषां पृथक् पृथक् ॥ दशवर्गस्य संयोगे विदुर्वैशेषिकांशकम् ॥ २७ ॥ ऐरावते सार्वभौमः सर्वैश्वर्यसमन्वितः ॥ देवलोके महादानकर्ता राजा क्षितीश्वरः ॥ २८ ॥ पारावते मांडलिकः सर्वशास्त्रविशारदः ॥ सिंहासने भवेद्भूमीपतिः सर्वैः स्तुतो महान् ॥ २९ ॥ गोपुरे धनवान्नित्यं सर्वविद्याविशारदः ॥ उत्तमे सकला संपत् पारिजाते धनान्वितः ॥ ३० ॥ स्वांशे यशस्वी मतिमान् सर्वसौख्यसमन्वितः ॥ ३१ ॥ अथ क्षणिकग्रहाः ॥ लग्नं क्रमात्सार्धघटीद्वयं स्यात् मेषाद्दिनेशस्थितकोणभानाम् ॥ राशीश्वरात् प्राणपदं क्रमेण घटीचतुर्थांशमुशंति तज्ज्ञाः ॥ १ ॥ चापाद्विपर्यैति रविस्तु सार्धघटीद्वयं रात्रिकरोऽपि तस्मात् ॥ क्रमेण सार्धद्वयनाडिकालः कुजो वृषाद्व्यत्ययनाडिमात्रम् ॥ २ ॥ चापाद्बुधो व्यत्ययनाडिमात्रं मीनादधः पंचघटींद्रपूज्यः ॥ क्रमेण युग्माद् भृगुनंदनस्तु घटीप्रमाणो दिननाथपुत्रः ॥ ३ ॥ व्यत्यासमार्गेण घटीप्रमाणे मेषादगुः सार्धघटीयुगं स्यात् ॥ मीनाच्छिखी तन्मदगो विलोमात् शास्त्रांतरे तत्फलमाहुरार्याः ॥ ४ ॥ बालाद्यवस्थाः क्रमशो ग्रहाणामोजे समे तद्विपरीतमाहुः ॥ बालः कुमारोऽथ युवा च वृद्धो मृतो लवानामृतुभिः क्रमेण ॥ बालाद्यव- ॥ २ ॥

* र. १५० चं. १५० मं. ६० बु. ६० गु. ३०० शु. ६० श. ६० रा. १५० ।

स्थानुगुणं व्रजंति तत्पाककाले दिननाथमुख्याः ॥ ५ ॥ मेषाजबस्तं प्रथमं क्रियश्च वृषोक्षगो तावुरिशुक्रभं च ॥ ६ ॥ बौधं नृयुग्मं जितुमं तृतीयं चांद्रं कुलीरं तु चतुर्थराशिः ॥ सिंहस्य कंठीरवलेयसंज्ञे पाथोनषष्ठी त्वबला च तन्वी ॥ ७ ॥ जूको वणिक् सप्तमतौलिसंज्ञाः कौर्प्योऽष्टमं कौजमलेस्तु संज्ञाः ॥ जैवं धनुस्तौक्षिकचापसंज्ञं त्वाकेकरं स्याद्दशमं च चक्रम् ॥ ८ ॥ हृद्रोगकुंभौ घटराशिसंज्ञे मीनो झषश्चांतिमारिःफसंज्ञः ॥ होरा तनुर्मूर्त्युदयं शिरश्च वाग्वित्तकौटुंबमथाक्षिसंज्ञम् ॥ ९ ॥ सहोत्थदुश्चिक्यगलं तृतीयं शौर्यं च कर्णं सुखमंबु बंधुः ॥ रसातलं वै हिबुकं च वेश्मपातालहृद्वाहनमातृसंज्ञाः ॥ बुद्धिप्रभावात्मजमंत्रसंज्ञं विवेकशक्ती उदरप्रदेशः ॥ १० ॥ रोगक्षतारिव्यसनं तु चोरस्थानं भवेद्विघ्नमिहाहुरार्याः ॥ चित्तोत्थकामो मदनश्च भर्तृस्थानं कलत्रं दधिसूपसंज्ञम् ॥ ११ ॥ क्षीरं गुडं मूत्रककृच्छ्रनाम गुह्यं च रंध्रं मरणांतकायुः ॥ धर्मोदयापैत्रिकभाग्यभं तु गुरुस्तपोलाभशुभार्जितानि ॥ १२ ॥ आज्ञा च मानं दशमं च कर्म तदास्पदं खं धनलाभमायम् ॥ व्ययोऽत्यभं रिःफविनाशसंज्ञं लग्नांत्यखंडः कथितो मुनींद्रैः ॥ १३ ॥ दुःस्थाश्च नाशप्रभवा भवंति षष्ठाष्टरिःफानुगतास्तथैव ॥ उद्यंति पृष्ठेन वृषाजचापकुलीरनक्रा बलिनः सयुग्माः ॥ ते रात्रिकालेऽह्नि बलास्तु शेषाः शीर्षोदया मीनमुदेत्यु-

भाभ्याम् ॥१४॥ अथ प्रकाशग्रहाः ॥ धूमोऽर्कों विश्वभागश्रुतिभवनयुतो मंडलाच्छोधितोऽसौ
पातः षड्राशियुक्तः परिधिरथ भसंशोधितश्चापनामा ॥ शैलांशा भागयुक्तं धनुरथ च शिखी पंच
ते त्वप्रकाशाः प्रादुर्भावे च तेषां फलमिह कथितं जातकप्रश्नयोः स्यात् ॥ १५ ॥ व्योमास्तपा-
तालविलग्नभानां वदंति नामानि मुनींद्रजालाः ॥ तत् कंटकं केंद्रचतुष्टयं च वर्गोत्तमास्तत्स्वन-
वांशकास्तु ॥ १६ ॥ जलचरपशुनरकीटा बंधौ माने तनौ मदे चापि ॥ क्रमशो भवंति वीर्या विग-
तबलास्तत्सप्तमे वापि ॥ १७॥ मेषोक्षनक्रांगनकर्किमीनतुलाधरा स्युर्दिनपात्स्वतुंगाः ॥ अत्यु-
च्चभागैर्नय १० गान ३ दार २८ मत्या १५ मना ५ सार २७ नरैः २० क्रमेण ॥ १८ ॥ सिंहो-
क्षवस्तांगनचापतौलिकुंभा भवंत्युच्चसमानभावाः ॥ मूलत्रिकोणानि भवंति तानि किंचिद्विही-
नानि बलानि सूर्यात् ॥ १९ ॥ दिवाबला मानुषराशयः स्यू रात्रौ बलाढ्याः पशवश्च कीटाः ॥
संध्याद्वये भ्रातृभवास्पदानां सषष्ठभानां तुचयेति संज्ञा ॥ २० ॥ रक्तः श्वेतः श्यामकांतिश्च
रक्तो धूम्रश्चित्रः कृष्णकांतिः सुवर्णः ॥ स्वर्णाभः स्यात्कर्बुरो बभ्रुवर्णः स्वच्छो वर्णो वर्णितो ॥ ३ ॥
बुद्धिमाद्भिः ॥ २१ ॥ वेशिस्थानं सूर्ययुक्ताद्द्वितीयं चक्रार्धेऽस्मिन्मानमाहुर्मुनींद्राः ॥ वेदघ्नं स्याद्बा-
णसंख्याधिकं तु वैलोम्याद्वा जूकराशेः क्रमेण ॥ २२ ॥ दिनेशचंद्रौ नरपालमुख्यौ सेना कुजः

सोमसुतः कुमारः ॥ शुक्रेज्यपूज्यौ सचिवौ शनिश्च प्रेष्यस्तु तद्वत्तिमुपैति जातः ॥ २३ ॥ आत्मा रविः शीतकरो मनस्तु सत्वं कुजो भाषणमब्जसूनुः ॥ वाचांपतिर्ज्ञानसुखे मदश्च शुक्रो भवेद-र्कसुतस्तु दुःखम् ॥ २४ ॥ सूर्यो हेलिर्भानुमान् दीप्तरश्मिश्चंडांशुः स्याद्भास्करोऽहस्करश्च ॥ अब्जः सोमश्चंद्रमाः शीतरश्मिः शीतांशुः स्यात् ग्लौर्मृगांकः कलेशः ॥ २५ ॥ आरो वक्रश्चाव-नेयः कुजः स्याद्भौमः क्रूरो लोहितांगोऽथ पापी ॥ विज्ज्ञः सौम्यो बोधनश्चंद्रपुत्रश्चांद्रिः शांतः श्यामगात्रोऽतिदीर्घः ॥ २६ ॥ जीवोंऽगिरा देवगुरुः प्रशांतो वाचांपतीज्यत्रिदिवेशवंद्याः ॥ भृगूश-नो भार्गवसूनवोऽच्छकाणः कविर्दैत्यगुरुः सितश्च ॥२७॥ छायात्मजः पंगुयमार्कपुत्राः कोणो-ऽसितः सौरिशनी च नीलः ॥ क्रूरः कृशांग कपिलाक्षदीर्घौ तमो सुरश्चेत्यगुसैंहिकेयौ ॥ २८ ॥ स्वर्भानुराहू च विधुंतुदो स्यात्केतुः शिखी स्याद्ध्वजनामधेयः ॥ शनेः सुतः स्याद्गुलिकोऽथ मांदिर्यमात्मजः प्राणहरोऽतिपापी ॥ २९ ॥ प्राणस्त्वसुः प्राणपदस्य नाम पर्यायमन्यत्प्रवदंति तज्ज्ञाः ॥ भानुर्युगात्प्रांकितदेहरक्तश्यामान्वितः पिंगलनेत्रकांतिः ॥ ३० ॥ पित्तात्मकोऽयं समगात्रयष्टिः प्रतापयुक् सत्वगुणोऽल्परोमा ॥ संचारयुक् संकुचितार्थवाक्यः स्वल्पप्रदो दैविकबु-द्धियुक्तः ॥ ३१ ॥ चंद्रः सितांगः समगात्रयष्टिर्वाग्मी परिध्यंगविवेकयुक्तः ॥ क्वचित्कृशः शीतलवा-

क्ययुक्तः सत्वाश्रयो वातकफानिलात्मा ॥ ३२ ॥ कोपाग्निनेत्रः सितरक्तगात्रः पित्तात्मकश्चंचल-
बुद्धियुक्तः ॥ कृशांगयुक् तामसबुद्धियुक्तो भौमः प्रतापी रतिकेलिलोलः ॥ ३३ ॥ दूर्वाश्यामः
सोमपुत्रोऽतिविद्वान् रजोगुणः सूनृतवाक्यजालः ॥ हास्यप्रियः पित्तकफानिलात्मा सद्यः प्रतापी
ननु पुंश्चलश्च ॥ ३४ ॥ बृहस्पतिस्तुंदिलगात्रयष्टिः कफात्मकः श्रेष्ठमतिः सुविद्वान् ॥ सत्वाश्रयः
सर्वगुणाभिरामः पिंगाक्षमूर्धन्यकचाभिरामः ॥ ३५ ॥ सुलोचनश्चास्फुजिदात्तकामः सुखी बली
सुंदरकांतिपूर्णः ॥ आनीलवर्णांकितरोमयुक्तो रजोगुणः सर्वगुणाभिरामः ॥ ३६ ॥ जाल्मस्तु
मंदः कृशदीर्घगात्रः पिंगेक्षणः क्रूरकचाभिरामः ॥ स्थूलद्विजस्तामसबुद्धियुक्तो वातात्मको
वाक्कठिनस्तु निंद्यः ॥ ३७ ॥ बलेन निश्चित्य वदेद्ग्रहाणां तत्प्राश्निके जन्मनि तद्गुणांस्तु ॥ विप्रौ
भवेतां गुरुदानवेज्यौ दिनेशभौमौ नरपालमुख्यौ ॥ ३८ ॥ सोमश्च विड्वैश्यकुलप्रसूतौ दिनेश-
पुत्रस्तु चतुर्थवर्णः ॥ चांडालजातिस्त्वथ सैंहिकेयः केतुश्च जात्यंतरमत्र मांदिः ॥ ३९ ॥ रक्तः
श्वेतोऽतिरक्तो हरितकनकरुक्चित्रनीलास्तु नाथा वह्न्यंभस्त्वग्निजातो हरिसुरगणराडिंद्रभा-
र्याब्जजाताः ॥ भानुः काव्यो धराभूरगुशनिशशिनः सोमपुत्रामरेज्या ज्ञेयास्त्विद्राादिनाथाः
क्रियवृषमिथुना राशयस्ते सचांद्राः ॥ ४० ॥ क्षीणेंदुभूसूनुदिनेशमंदाः पापा बुधस्तत्सहितस्तु

पापः ॥ नपुंसकौ सौम्यदिनेशपुत्रौ शशांकशुक्रौ युवती च शेषाः ॥ ४१ ॥ नरग्रहा भानुकुजामरेज्याः सूतौ बलात्तत् प्रवदंति तज्ज्ञाः ॥ भौमस्य मज्जापि वसा गुरोस्तु शुक्रं भृगोस्त्वक् शशिनंदनस्य ॥ ४२ ॥ चंद्रस्य रक्तं दिनपस्य चास्थि स्नायुः शनेर्धातुवशादुपाधिः ॥ तद्धातुकोपान्मरणं प्रयाति रंध्रस्थितानामिह खेचराणाम् ॥ ४३ ॥ देवस्थानं भास्करस्यांबुवासं चंद्रस्याग्निस्थानमंगारकस्य ॥ क्रीडास्थानं सोमपुत्रस्य कोशस्थानं जीवस्यैवमाहुर्भृगोस्तु ॥ ४४॥ सुतिस्थानं भानुजस्योत्करं तु सर्पस्थानं सैंहिकेयस्य चैवम् ॥ जीर्णं शनेर्वासरनायकस्य स्थूलं गुरोर्मध्यमकं कवेश्च ॥ ४५ ॥ काठिन्यमब्जस्य तु नूतनं वित्छिन्नं कुजस्याग्निहतं च वस्त्रम् ॥ कंथा फणींद्रस्य तु चित्ररूपा केतोर्महच्छिद्रयुता विशेषात् ॥ ४६ ॥ ताम्रं दिनेशस्य निशाकरस्य मणिर्हिरण्यं तु धरासुतस्य ॥ शुक्तिर्विदो देवगुरोश्च रूप्यं मुक्ता भृगोरायसमर्कसुनोः ॥ ४७ ॥ राहोस्तु सीसं शिखिनश्च नैल्यं धरामणिस्तत्कथयंति तज्ज्ञाः ॥ पीतांबरं देवगुरोर्भृगोस्तु क्षौमांबरं भास्करस्येंद्रगोपम् ॥ ४८ ॥ शुक्लं क्षौमं रात्रिनाथस्य चांद्रेः श्यामं क्षौमं रक्तचित्रं कुजस्य ॥ वस्त्रं चित्रं पट्टवस्त्रं शनेस्तु नीलं राहोर्जीर्णचित्रान्वितं च ॥ रूपान्वितं तद्वसनं च केतोर्बलान्वितानां तु वदेद्ग्रहाणाम् ॥ ४९ ॥ भृगोर्वसंतः क्षितिसूनुभान्वोर्ग्रीष्मः शशांकस्य ऋतुः

प्रवर्षः ॥ विदः शरद्देवगुरोस्तु हैम्नो ऋतुः शनेः स्याच्छिशिरस्तु कालः ॥ ५० ॥ द्रेष्काणपैस्त-
द्रुतवस्तु वाच्यं प्रश्ने प्रभूतावपि नष्टसंज्ञे ॥ भानोः कटुर्भूमिसुतस्य तिक्तं सोमस्य तावल्लवणं
विदस्तु ॥५१॥ मिश्रीकृतं वस्तु सुरेज्यभृग्वोर्माधुर्यमम्लं च शनेः कषायः ॥ ऋतुत्रयं वासरना-
यकस्य क्षणं शशांकस्य दिनं कुजस्य ॥ ५२ ॥ विदो ऋतुर्देवगुरोस्तु मासः पक्षो भृगोर्वत्सर-
मर्कसूनोः ॥ अष्टौ तु मासास्तुहिनांशुशत्रोः केतोस्तु मासत्रयमेव कालः ॥ ५३ ॥ धातुग्रहा
राहुशनींदुभौमा मूलग्रहौ शुक्रदिनाधिनाथौ ॥ जीवग्रहौ जीवशशांकसूनू मेषादि दस्रादि यथा-
क्रमेण ॥ ५४ ॥ अथोर्ध्वदृष्टी दिननाथभौमौ दृष्टिः कटाक्षेण कवींदुसून्वोः ॥ शशांकगुर्वोः सम-
भागदृष्टिस्त्वधोक्षिपातस्त्वहिनाथशन्योः ॥ ५५ ॥ पश्यत्यसौ भानुसुतस्तृतीयं मानं च पूर्णं
चतुरस्रमारः ॥ जीवस्त्रिकोणं मदनं च सर्वे पश्यंति दृष्ट्या चरणप्रवृद्ध्या ॥ ५६ ॥ भानोस्तु
मित्राणि कुजेंदुजीवाः समो बुधः शुक्रशनी विपक्षौ ॥ इष्टौ शशांकस्य दिनेशसौम्यौ शेषाः
समा भूमिसुतस्य मैत्रम् ॥ ५७ ॥ रवींदुजीवाश्च बुधश्च शत्रुः समौ दिनेशात्मजदानवेज्यौ ॥
सौम्यस्य मित्रे दिननाथशुक्रौ शेषाः समा रात्रिकरः सपत्नः ॥५८॥ शुक्रेंदुजौ देवगुरोः सपत्नौ
मित्राणि सर्वे रविजस्तु मध्यः ॥ शनींदुजाविष्टकरौ भृगोस्तु शेषाः सपत्नाश्च समौ कुजेज्यौ॥५९॥

सौरस्य मित्रे भृगुपुत्रसौम्यौ समो गुरुस्ते निखिलाः सपत्नाः ॥ राहोस्तु मित्राणि कवीज्यमंदाः केतोस्तथैवात्र वदंति तज्ज्ञाः ॥ ६० ॥ भवंति तात्कालिकमित्रभूताः सर्वे च वाक्सोदरबंधुयुक्ताः ॥ स्वात्स्वात्क्रमाद्व्युत्क्रमतस्तथैव मन्यस्थितास्तत्समयारिभूताः ॥ ६१ ॥ तात्कालमित्रं तु निसर्गमित्रं द्वयं भवेत्तत्त्वधिमित्रसंज्ञम् ॥ तथैव शत्रोरधिशत्रुसंज्ञमेकत्र शत्रुः समतामुपैति ॥ ६२ ॥ स्वोच्चे सुहृद्भे स्वनवांशकेऽपि स्वर्क्षे दृकाणे द्विरसांशकेऽपि ॥ कलांशकाद्यंशयुतेऽपि चैवमुपैति तत्स्थानबलं ग्रहेंद्रः ॥ ६३ ॥ लग्ने बुधेज्यौ बलिनौ तु पूर्वे वीर्ये यमे तद्दशमेऽर्कभौमौ ॥ कामेऽर्कसूनुर्बलवाञ्जलेशे बंधौ निशानाथकवी कुबेरे ॥ ६४ ॥ तत्सप्तमे दिग्बलशून्यमाहुस्तदंतरे चत्त्वनुपात एव ॥ स्वमासहोरादिनवत्सरेषु वीर्यान्विता भानुमुखा ग्रहेंद्राः ॥ ६५ ॥ रात्रौ बलाढ्याः शनिचंद्रभौमास्त्रयो ग्रहाश्चाह्नि रवीज्यशुक्राः ॥ सदा बली वित्सितकृष्णपक्षे सौम्यास्तदन्ये बलिनः क्रमेण ॥ ६६ ॥ शुभेक्षिताः पूर्णबलान्वितास्तु दृष्टेर्बलं पापखगैरदृष्टाः ॥ सौम्यायने त्वतिबली दिवसाधिनाथश्चंद्रस्तदन्यसमये बलपूर्णयुक्तः ॥ ६७ ॥ वक्रान्विताः क्षितिसुतप्रमुखाः समस्ता युद्धे जयी जलपदिग्गतकांतियुक्तः ॥ मंदारसौम्यगुरुशुक्रशशांकसूर्या नैसर्गिकाख्यबलिनः खचराः क्रमेण ॥ ६८ ॥ लग्नस्य वीर्यमधिपस्य बलं तु

सर्वं मुख्यं वदंति खलु षड्विधवीर्यमेवम् ॥ लग्नं नृभं चेद्बलमत्र रूपमाब्जं चतुष्पादभमर्धसंज्ञम् ॥
चेत्कीटलग्नं किमपीह नास्ति स्फुटं विलग्नस्य बलं तदाहुः ॥ ६९ ॥ सार्धानि षट् ६ । ३०
तीक्ष्णकरो बलीयांश्चंद्रस्य षट्पंच वसुंधराजः ॥ सप्तेंदुसूनोरपि षड् ६ गुरोश्च सार्धानि पंचा-
५ । ३० थ सितो बलीयान् ॥ ७० ॥ मंदस्तु पंचैव च षड् बलानां संयोग एवापरथान्यथा स्युः ॥
रूपत्रयं बलमुशंत्यथ पादहीनं २ । ४५ स्थानं तु दिग्बलमथांघ्रिविहीनरूपम् ० । ४५ ॥७१॥
ऋत्वंशहीन० । ५० बलमत्र तु चेष्टिताख्यमष्टांशहीनयुगमेव तु कालवीर्यम् ३ । ३० ॥ पूर्णा
बला रविशशांकसुतामरेज्याश्चार्धं ० । ३० बलं त्वयनजं हि पृथग्विभागे ॥ ७२ ॥ रसांश-
हीनं ० । ५० दिशि वीर्यमाहुः स्थाने तु पादाधिकयुग्मरूपम् २ । १५ ॥ कालं बलं त्र्यंशवि-
हीनयुग्म १ । ४० मर्धं ३० भवेच्चेष्टितवीर्यमेव ॥ ७३ ॥ त्र्यंशोनमेकं ० । ४० त्वयनं बलं
स्याच्छीतांशुदेवेंद्रसपत्नगुर्वोः ॥ चेष्टाबलं त्र्यंशविहीनमेकं ० । ४० साष्टांशरूपं १ । ७३० समये
बलं स्यात् ॥ ७४ ॥ दिश्यर्धरूपं ० । ३० बलमायनं च त्र्यंशं ० । २० भवेत्स्थानिकमर्धयु-
ग्मम् २ । ३० ॥ दिनेशपुत्रस्य वसुंधरायाः सूनोः क्रमाद्वीर्यमुदाहरंति ॥ ७५ ॥ आरोहवीर्याः
प्रभवंति भावसमानपर्यन्तमतश्च्युताः स्युः ॥ स्वोच्चे सुहृत्क्षेत्रगते ग्रहेंद्रे षड्भिर्बलैर्मुख्यबला-

न्वितोऽपि ॥ ७६ ॥ संधौ स्थितः सन्नफलः प्रदिष्टश्चित्यं विशेषेण दशाविपाके ॥ प्राणत्रिकोणं प्रवदंति लग्नं तदेव मांद्यन्वितराशिकोणे ॥ ७७ ॥ मांद्यंशकात्कोणगतं विलग्नं तदंशकामस्थितराशिकोणे ॥ शशांकसंयुक्तभकोणराशौ तदंशकात्तन्मदकोणभे वा ॥७८॥ प्रश्नेऽपि तज्जन्मसमानकाले लग्नस्य निश्चायकमत्र तज्ज्ञाः ॥ तयोर्बलेनापि विकल्पमाहुर्लग्नाब्जयोरित्थमुदाहरंति ॥ ७९ ॥ लग्ने बले मांदिवशाद्विलग्नं चंद्रे बले चंद्रवशाद्विलग्नम् ॥ ओजे तदंशे पुरुषस्य जन्मलग्ने स्त्रियस्तद्विपरीतभांशे ॥ ८० ॥ क्रमाद्ग्रहः पाचकबोधकश्च सकारको वेधकसंज्ञकश्च ॥ मंदारजीवामरशत्रुपूज्याः शुक्रारसूर्यात्मजवासरेशाः ॥ ८१ ॥ रवींदुसूर्यात्मजचंद्रपुत्राः शशांकजीवाच्छधरासुताश्च ॥ सूर्यात्मजारेंदुदिनाधिनाथा भौमेंदुपुत्रार्कदिनेशपुत्राः ॥ ८२ ॥ शुक्रेंदुदेवेज्यधरासुताश्च भवंति तत्पाकमुखा ग्रहेंद्राः ॥ स्थानानि वक्ष्ये क्रमशो ग्रहाणां षट्सप्तधर्मायगताः क्रमेण ॥ ८३ ॥ भानोः शशांकान्मदभाग्यलाभयुक्तास्तृतीयेन धरासुताच्च ॥ धनारिलाभांत्यगताब्जसुनोर्द्वितीयबंध्वात्मजसोदराश्च ॥ ८४ ॥ गुरोस्तु षष्ठात्मजकामारिःफाः शुक्राद्धनारिव्ययबंधुयुक्ताः ॥ तृतीयलाभारिकलत्रगास्तु दिनेशसूनोः प्रवदंति तज्ज्ञाः ॥ ८५॥ शत्रुर्दिनेशस्य तु पाचकः स्यान्मित्राणि शेषाः शशिनस्तु वैरी ॥ व्यये तु भौमस्य च वेधकश्च

शत्रुर्बुधस्यांतकरो गुरोस्तु ॥ ८६ ॥ पाकग्रहो वेधकसंज्ञकश्च शत्रुर्भवेदास्फुजितश्च वैरी ॥
सकारको वेधकसंज्ञकश्च शनेस्तु तत्कारकखेचरोऽरिः ॥८७॥ मिष्टान्नपानांबरभूषणाप्तिं राज्या-
र्थभूलाभमतीव सौख्यम् ॥ धैर्यं मनोत्साहमतीव शक्तिं कुर्याद्ग्रहः पाचकसंज्ञकोऽयम् ॥ ८८ ॥
मित्रे यथान्यायफलं तदन्ये ग्रहे तदन्यत् फलमातनोति ॥ समग्रभाग्यं बहुराजपूज्यं विद्यां वि-
नोदांकितराजगोष्ठीम् ॥ ८९ ॥ दयातपःप्राप्तमचिंत्यभाग्यं कुर्यात्फलं बोधकसंज्ञकश्च ॥ ग्रहे
तु तस्मिन्फलमातनोति समग्रपर्याप्तफलं तदन्ये ॥ ९० ॥ भाग्यं क्वचित्क्षीणफलं क्वचिच्च दारा-
र्थबन्ध्वात्मजरोगपीडाम् ॥ चोराग्निपीडां कलहं जनैस्तु सकारको मित्रसमो यदि स्यात् ॥९१॥
सकारको वैरिसमो न तत्तु वदंति व्यत्यासफलं विशेषात् ॥ चोराग्निबंधुक्षितिपालसंघैरतीव
दुःखं स्वपदच्युतिं च ॥ विदेशयानं धननाशनं च वेधग्रहस्तत्फलमन्यथान्यः ॥ ९२ ॥ अथ
गुलिकसाधनम् ॥ तरु २६ खर २२ जय १८ भय १४ नृप १० तनु ६ खनि २ नाड्यो
भास्करादिवारेषु ॥ दिनमानघटीगुणिता नाग ३० हृतागुलिकनाडिकाः स्पष्टाः ॥ ९३ ॥
स्फुटगुलिकनाडिकाभिस्तत्कालार्केण सायनेनापि ॥ लग्नवदानेतव्यो राश्यंशकलादिरूपको
गुलिकः ॥ ९४ ॥ चंद्र २६ रुद्र २२ जय १८ वैद्य १४ नृपा १० तोना ६ खु २ नाडिनिहताद्दि-

नमानात् ॥ नाग ३० लब्धमितमांदिघटी स्याल्लग्नवत्स्फुटमिहानयेत्तदा ॥ ९५ ॥ पाकेशाद्वसु-
भांत्यशत्रुभवने युक्तोपहारेश्वरस्तच्छत्रुर्भवतीह लाभधनभे सोत्थात्मजे बंधुभे ॥ भाग्ये वा दशमे
समन्वितग्रहस्तच्छोभनाख्यस्ततस्तत्कामान्वितखेचरस्त्वशुभदः प्रोक्तो ग्रहाणां क्रमः ॥ ९६ ॥
पापग्रहादिसहितो द्युचरस्तु शत्रुः स्यात् स्थानतोऽपि शुभदस्त्वतिशोभनाख्यः ॥ स्थानानु-
रूपफलमेव विचिंत्य मार्गं ज्ञात्वा वदंति मुनयो जगतां सुसिद्धयै ॥ ९७ ॥ संज्ञाध्यायो वर्णितः
सर्वशास्त्रात्सारं बुद्ध्वा सर्वलोकोपकारम् ॥ यद्यत्सर्वं वेङ्कटेशेन बुद्ध्वा तत्तत्पाके योजयेत्तत्फ-
लानि ॥ ९८ ॥ इति सर्वार्थचिन्तामणौ प्रथमोऽध्यायः समाप्तः ॥ १ ॥ ॥छ॥ ॥छ॥
श्रीगणेशाय नमः ॥ भावोद्भवानि विविधान्युचितानि यस्माच्छास्त्रांतरादृषिगणाद्दृढबुद्ध-
यस्तु ॥ यान्येव तानि खगयोगवशाद्वदंति बुद्ध्या समीक्ष्य विदुषां तु मुदे करोमि ॥ १ ॥
भावाः सर्वे शुभपतियुता वीक्षिता वा शुभेशैस्तत्तद्भावाः सकलफलदाः पापदृग्योगहीनाः ॥
पापाः सर्वे भवनपतयश्चेदिहाहुस्तथैव खेटैः सर्वैः शुभमपि फलं निम्नमूढारिहीनैः ॥ २ ॥
लग्नादिभावाद्रिपुरंध्ररिःफे पापग्रहास्तद्भवनादिनाथाः ॥ सौम्यास्तु नात्यंतफलप्रदास्तद्भा-
वादिकानां फलमेवमाहुः ॥ ३ ॥ यद्भावनाथो रिपुरंध्ररिःफे दुःस्थानपो यद्भवनस्थितो वा ॥

तद्भावनाशं कथयंति तज्ज्ञाः शुभेक्षिते तद्भवनस्य सौख्यम् ॥ ४ ॥ तत्तद्भावात्त्रिकोणे स्वसुख-
मदनभे चास्पदे सौम्ययुक्ते पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ॥ भावानां पुष्टिमाहुः
सकलशुभकरीमन्यथात्वे प्रणाशं मिश्रं मिश्रग्रहेंद्रैः सकलमपि तथा मूर्तिभावादिकानाम् ॥५॥
नाशस्थानगतो दिवाकरकरैर्लुप्तस्तु यद्राशिपो नीचारातिगतोऽथवा यदि भवेत्सौम्यैरयुक्तेक्षितः ॥ तद्भावस्य विनाशनं मुनिगणाः शंसंति खेटैर्युतश्चेदत्रापि फलप्रदो नहि तदा मूर्त्यादिभानां क्रमः ॥ ६ ॥ अर्थाप्तिं कथयेद्विलग्नशशिनोः प्राबल्यतः खेचरैर्मानस्थैः पितृमातृशत्रुसुहृद्भ्रात्रादिभिः स्याद्धनम् ॥ भृत्याद्वा दिननाथलग्नशशिनां मध्ये बलीयांस्ततः कर्मेशस्थनवांशराशिपवशाद्वृत्तिं जगुस्तद्विदः ॥ ७ ॥ भैषज्यचामीकरतोयपानपण्येन मुक्तामणिविप्रलंभात् ॥ अन्योन्यदूतागमवृत्तिमार्गाज्जीवत्यसौ वासरनायकांशे ॥ ८ ॥ मंत्रोपदेशरसवादविनोदमार्गैर्वृत्तिं जगुः सकलशास्त्रपुराणमार्गैः ॥ ज्ञानोपदेशपथिभिः क्षितिपालपूज्यो जीवत्यसौ वासरनायकांशे ॥ ९ ॥ जलोद्भवानां क्रयविक्रयेण कृषेश्च मृद्वादविनोदमार्गात् ॥ राजांगनासंश्रयवृत्तिरूपान्निशाकरांशे वसनक्रयाद्वा ॥ १० ॥ धातोर्विवादेन रणप्रहारात्स्तब्धाग्निवादात्कलहप्रवृत्त्या ॥ जीवत्यसौ साहसमार्गरूपया धरासुतांशे यदि चोरवृत्त्या ॥ ११ ॥ शिल्पादिकाव्या-

गमशास्त्रमार्गाज्ज्योतिर्गणज्ञानवशाद्बुधांशे ॥ वरार्थवेदाध्ययनाज्जपाच्च पुरोहितव्याजवशात्प्र-
वृत्तिः ॥ १२ ॥ जीवांशके भूसुरदेवतानामुपासकाध्यापकमार्गरूपात् ॥ पुराणशास्त्रागमनीति-
मार्गाद्धर्मोपदेशेन कुसीदमाहुः ॥१३॥ सुवर्णमाणिक्यगजाश्व मूलाद्गवां क्रयाज्जीवनमाहुरार्याः ॥
गुडौदनक्षीरदधिक्रयेण स्त्रीणां प्रलोभेन भृगोः सुतांशे ॥ १४ ॥ शन्यंशके कुत्सितमार्गवृत्त्या
शिल्पादिभिर्दारुमयैर्वधाद्यैः ॥ विन्यस्तभाराज्जनविप्रलंभादन्योन्यवैरोद्भवमूलमार्गात् ॥ १५ ॥
स्वक्षेत्रे स्वनवांशके सुहृदि वा स्वात्युच्चभागे यदा स्वद्रेष्काणचतुष्टयेषु सहिता मूलत्रिकोणेषु
वा ॥ तत्तत्कालबलान्वितास्तु खचरा वर्गोत्तमांशेऽपि वा ते सर्वे शुभदा भवंति हि तदा स्वांत-
र्दशादावपि ॥१६॥ तत्तद्भावाद्रंध्रपो वा खरेशो द्रेष्काणानां चाधिनाथोऽर्कपुत्रः ॥ मांदीशो वा
तन्नवांशाधिपो वा तेषां मध्ये यो ग्रहः क्रूरभावः ॥ १७ ॥ तद्भावेशस्याधिशत्रुग्रहो वा यो वा
खेटो बिंदुशून्यर्क्षयुक्तः ॥ तत्तत्पाके मूर्तिवित्तादिकानां नाशं ब्रूयाद्दैववित्प्राश्निकश्च ॥ १८ ॥
मंदमांद्यगुखरेशरंध्रपास्तन्नवांशपतयोऽपि ये ग्रहाः ॥ तेषु दुर्बलदशा मृतिप्रदा कष्टभे चरति
सूर्यनंदने ॥ १९ ॥ धनाधिपः पापखगो यदि स्याच्छन्यारभोगींद्रदिनेश्वराणाम् ॥ अंतर्दशायां
धननाशमाहुः पापान्विते तद्भवने तथैव ॥ २० ॥ धनान्वितः पापखगस्तदीशः स्याच्चेद्दशायां

क्षितिपालकोपात् ॥ नानार्थनाशं निगदेन्नराणां स्थानच्युतिः स्वेष्टजनैर्विरोधः ॥ २१ ॥ पापग्रहाणामपहारकाले पापग्रहस्यैव दशासुकाले ॥ भुक्त्यर्थमानात्मजसोदराणां नाशं समायांति शुभैर्न दोषः ॥ २२ ॥ वित्ते शुभे शोभनखेचरेशे तत्पाककाले धनलाभमेति ॥ शुभग्रहाणामपहारकाले तथा भवेदात्मजवाग्विलासः ॥ २३ ॥ पापग्रहे विक्रमभावनाथे पापान्विते पापवियच्चराणाम् ॥ अंतर्दशायामनलास्त्रचोरैर्दुःखं समायाति शुभप्रदेऽपि ॥ २४ ॥ कलिप्रकोपानलचोरभूपैर्दुःखं मनोजाड्यमतीव कष्टम् ॥ सोत्थेशपापग्रहदायकाले शुभेक्षिते तादृशमत्र नास्ति ॥ २५ ॥ दुश्चिक्यभावाधिपदायकाले सौम्येतराणामपहारकाले ॥ नाशं वदेत्तत्र सहोदराणां भवेद्विरोधः सहजैर्विशेषात् ॥ २६ ॥ क्षेत्राधिपस्यैव शुभेतरस्य पापग्रहाणामपहारकाले ॥ स्थानच्युतिं बंधुविनाशमेति नीचास्तगानामपहारकेऽपि ॥२७॥ बुद्धिभ्रमं कुत्सितभोजनं च पापग्रहाणां हि सुतेशकाले ॥ अंतर्दशायां प्रवदेन्नराणां शुभग्रहश्चेन्न तथा भवेत्तु ॥२८॥ राजाग्निचोरैर्व्यसनं व्रणेशदशाविपाके तु शुभेतराणाम् ॥ अंतर्दशायामपि कष्टमेति प्रमेहगुल्मक्षयापित्तरोगैः ॥ २९ ॥ दारेशपापग्रहदायकाले स्त्रिया विरोधं मरणं च तस्याः ॥ विदेशयानं च पुरीषमूत्रकृच्छ्रं भवेद्भूपतिकोपमत्र ॥ ३० ॥ रंध्रेशकाले फणिनाथभौमशनैश्वराणामपहार-

काले ॥ आयुर्यशोवित्तविनाशनं च दारात्मबंध्विष्टसहोदराणाम् ॥ ३१ ॥ स्थानच्युतिर्बंधुविरोधिना च विदेशयानं सहजैर्विरोधः ॥ भवेच्छुभेशस्य दशाविपाके शनैश्चराराहिदिनाधिपानाम् ॥३२॥ कारागृहप्राप्तिरनेकदुःखं दुःस्वप्नशोकानलदग्धदेहम् ॥ कर्मेश्वरस्योत्तरभुक्तिकाले पापग्रहाणामपकीर्तिमेति ॥ ३३ ॥ दशाविशेषे त्वथ लाभपस्य भुक्त्यंतरे द्रव्यविनाशनं च ॥ रव्यारभोगींद्रशनैश्चराणां कार्यार्थकृच्छ्रं क्षितिपालकोपात् ॥ ३४ ॥ व्ययेशदाये रविसूनुभुक्तौ दिनेशभूम्यात्मजयोर्विरोधः ॥ कलिक्षयौ मानधनक्षयौ च राहोस्तु भुक्तावरिसर्पपीडा ॥ ३५ ॥ तत्कालशत्रुप्रभवात्फलं तन्मित्रे यदि स्यात्फलमर्धमाहुः ॥ अन्योन्यषष्ठाष्टमदायकाले स्थानच्युतिर्वा मरणं विशेषात् ॥ ३६ ॥ स्पष्टीकरिष्यंति दशाविभागे विस्तारमार्गेण मुनींद्रजालाः॥ आपाततः संकुचितार्थवाक्यैरुक्ता ग्रहाणां फलपाकपंक्तिः ॥ ३७ ॥ निषेकलग्नाद्दिनपस्तृतीये राशौ यदाचारवशादुपैति ॥ आधानलग्नादथवा त्रिकोणे रवौ यदा जन्म वदेन्नराणाम् ॥ ३८ ॥ आधानलग्नात्सुतभे तु जन्मलग्नं भवेच्छास्त्रविदो वदंति ॥ आधानलग्ने शुभदृष्टियोगे दीर्घायुरैश्वर्यधनान्वितः स्यात् ॥ ३९ ॥ धर्मार्थपुत्रेषु निषेकलग्नाद्दृष्टेषु सौम्यैः पुरुषग्रहैर्वा ॥ पुत्रांशके वापि निषेककाले पुंजन्मबाला जननं विलोमात् ॥ ४० ॥ निषेकलग्ने शशिनंदनो वा रव्यात्म-

जो वा यदि पापदृष्टः ॥ पिंडाकृतिं जन्म वदेत्तदानीं शुभेक्षितश्चेन्न तथाविधं तत् ॥ ४१ ॥ निषे-
कलग्नेशतृतीयनाथौ लग्नस्थितौ चेद्यमलोद्भवः स्यात् ॥ तृतीयनाथेन युतो निषेकलग्नेश्वरस्त-
त्सहजे तथैव ॥ ४२ ॥ लग्नेश्वरे कर्मगते विलग्ने भोगींद्रयुक्ते सति पादजातः ॥ रंध्रेश्वरे राहुयुते
विलग्ने जातोरगैर्वेष्टितसंभवः स्यात् ॥ ४३ ॥ केंद्रे सराहौ गुलिकेन युक्ते लग्नेश्वरे वा निधनेश-
युक्ते ॥ क्रूरग्रहाणां तु दृकाणलग्ने जातोरगैर्वेष्टितसंभवः स्यात् ॥ ४४ ॥ लग्नत्रिभागेऽडजसर्प-
काले तथाब्जयुक्ते तु तथा त्रिभागे ॥ शुभग्रहाणां तु दृशा विहीने जातोरगैर्वेष्टितसंभवः स्यात्
॥४५॥ छागोक्षकंठीरवलग्नभूते भौमान्विते वा रविजेन युक्ते ॥ राश्यंशसादृश्यसमानदेहो नालेन
संवेष्टितजात एव ॥४६॥ लग्ने सपापे बहुपापदृष्टे राहुध्वजाभ्यां सहितेऽथवात्र ॥ पापग्रहाणां तु
विलग्नभे वा जातो नरो नालविवेष्टितांगः ॥४७॥ क्रूरांतरे लग्नगते सराहौ लग्ने कुजे वासरनाथ-
दृष्टे ॥ लग्नेशनौ भूमिसुतेन दृष्टे जातो नरो नालविवेष्टितांगः ॥४८॥ परस्परक्षेत्रसमाश्रितो वा दे-
हांबुपौ जन्म वदेत्तदानीम् ॥ लग्नेश्वरे वाहिबुकेश्वरे वा ध्वजाहियुक्ते जननं पशोस्तु ॥४९॥ पापा
बलाढ्या विबलास्तु सौम्या नपुंसकौ केंद्रगतौ तदानीम् ॥ दृष्टिस्तयोर्वाथ वियोनिलग्ने चतुष्पदां
जन्म वदंति तज्ज्ञाः ॥ ५० ॥ पापा बलाढ्याः स्वगृहं प्रपन्नाः सौम्याः स्वगेहेतरराशियुक्ताः ॥

चतुष्पदां जन्म तनौ वियोनौ वदंति शास्त्रांतरपारगम्याः ॥ ५१ ॥ पक्षी दृकाणे तु विलग्न-
भूते बलान्वितेनैव ग्रहेण दृष्टे ॥ राशौ चरे वा यदि तन्नवांशे वियोनिजन्मेति बुधांशके वा ॥५२॥
शुक्रेक्षिते गोजननं महिष्याः सूर्यात्मजेनापि युतः स दृष्टः ॥ राहुध्वजाभ्यां सहितोऽथ दृष्टो
मेषस्तु जातोऽन्यपशुस्तथान्यैः ॥ ५३ ॥ लग्ने बुधक्षेत्रगतेऽरिनाथे लग्नेश्वरे सोमसुतर्क्षसंस्थे ॥
जातस्तु सस्त्रीकनपुंसकः स्याच्छन्यारयोगात्पुरुषस्तु षंढः ॥ ५४ ॥ अन्योन्यदृष्टौ शशिवास-
रेशौ युग्मौजगाविंदुजभानुपुत्रौ ॥ ओजर्क्षगो भानुसुतो दिनेशं पश्यत्यसौ युग्मगतस्तथैव
॥५५॥ ओजे तु लग्ने कुमुदात्मबंधुस्तत्र स्थितो युग्मगभौमदृष्टः ॥ युग्मौजगाविंदुसुतौ कुजेन
दृष्टौ विलग्नाच्च निशाकरात्तु ॥ ५६ ॥ षट् क्लीबयोगाः पुरुषांशयुक्ताः प्रोक्ता महद्भिर्बहुशास्त्र-
विद्भिः ॥ लग्नेश्वरश्चंद्रसुतेन युक्तः षंढो भवेत्सौम्यखगैरदृष्टः ॥ ५७ ॥ दुःस्थानगौ कर्मशुभा-
धिनाथौ बली विलग्नाधिपतिस्तदानीम् ॥ सीमंतकर्मादि विनैव जातो भवेन्नरः प्राथमिकोऽपि
तत्र ॥ ५८ ॥ लाभे सपापे त्वथ तद्गृहे वा जातो नरः प्राथमिकोऽपि तत्र ॥ सिंहोदये द्वारयुगं
गृहं तत् कन्योदये नीचगृहेऽपि जन्म ॥ ५९ ॥ नवांशपुत्राधिपतिः सराशेर्द्वारं जगुर्लग्नदृकाण-
राशेः ॥ द्वारं विलग्नाधिपतिः सराशेः केंद्रस्थितैर्वीर्यसमन्वितैर्वा ॥ ६० ॥ ग्रहैर्धनांत्यास्पदवे-

इमगैर्वा वाच्यास्तदानीमुपसूतिकास्तु ॥ तत्र स्थिते भानुसुते तु शूद्रा रवौ स्थिते क्षत्रियभा-
मिनी सा ॥ ६१ ॥ राहुध्वजाभ्यामथ जातिहीना त्वन्यैर्ग्रहैर्जातिसमा प्रदिष्टा ॥ धनांत्यबंधु-
स्थितखेचरेंद्रैर्वाच्यास्तदानीमुपसूतिकाश्च ॥ ६२ ॥ तत्स्थानपैः संयुतखेचरेंद्रैः किंचिद्वदंत्यत्र
सहस्थितैश्च ॥ जीवेंदुपुत्रा सुरदेवपूज्यैस्तत्र स्थितैर्ब्रह्मकुलाभिरामाः ॥ ६३ ॥ एतेषु पापांश-
कसंयुतेषु तासां तु वैधव्यमुदाहरंति ॥ राहुध्वजाभ्यां सहितेषु तेष्वशुभाः स्त्रियस्तत्र शनैस्तु
योगात् ॥ ६४ ॥ कृष्णा च कुब्जा विधवा भवेत्सा योगाद्ग्रहाणां प्रवदेच्च संख्याम् ॥ बहिःप्रदेशे
गृहमध्यभागे दृश्यार्धभागस्थितखेचरेंद्रैः ॥ ६५ ॥ संख्यां वदेत्तत्र तदन्ययुक्तैस्त्वेकर्क्षगैस्तत्र
बहुत्वमाहुः ॥ दीपस्य चांचल्यमुदाहरंति चरे स्थिरे तद्दृढमत्र काले ॥ ६६ ॥ विदेहराशौ
स धृतः करेण तत्संयुतैर्व्योमचरैस्तु संख्याम् ॥ तैलं वदेत्तत्र निशाकरेण वर्तिर्विलग्नादिति
केचिदाहुः ॥ ६७ ॥ इति जन्मफलम् ॥ अथ तनुभावः ॥ लग्नेशे स्वोच्चमित्रांशे स्वनवांशगतेऽपि
वा ॥ शुभग्रहयुते दृष्टे देहसौख्यं विनिर्दिशेत् ॥ ६८ ॥ लग्नेशे बलसंयुक्ते केंद्रकोणगते शुभे ॥
पापग्रहैरसंदृष्टे देहसौख्यं वदेद् बुधः ॥ ६९ ॥ देवलोकांशगे सूर्ये लग्नेशे बलसंयुते ॥ भाग्येशे
स्वोच्चराशिस्थे बहुसद्भाग्यकीर्तिमान् ॥ ७० ॥ लग्नाधिपोऽतिबलवान् शुभवर्गयुक्तः स्वोच्चे

सुहृद्ग्रहयुतः स्वनवांशके वा ॥ लग्नाधिनाथसहिते यदि केंद्रनाथे सद्भाग्यकीर्तिधनधान्यचिरा-
युरेति ॥ ७१ ॥ लग्नेश्वरः क्रूरसमन्वितश्चेद्देहस्य सौख्यादिविनाशमाहुः ॥ तादृक् फलं नाश-
गतोऽपि तस्य शुभेक्षितश्चेत्फलमन्यथा स्यात् ॥ ७२ ॥ दुःस्थानपेनापि युते विलग्ननाथे
विलग्ने सति रोगभाक् स्यात् ॥ बलैर्विहीने सति लग्ननाथे केंद्रत्रिकोणे न तु रोगभाक् स्यात्
॥ ७३॥ लग्नेश्वराधिष्ठितराशिनाथो दुःस्थानगो दुर्बलदेहभाक् स्यात् ॥ तत्तद्भावाधिष्ठिते राशि-
नाथैर्दुस्थैर्विलग्नादिविनाशमाहुः ॥ ७४ ॥ पापैर्विलग्ने गुलिके त्रिकोणे लग्नेऽहिनाथे गुलिकेन
युक्ते ॥ लग्नेश्वरे पापयुतेऽथ लग्ने राहौ यदा वंचनचोरभीतिः ॥७५॥ शनेस्तु योगात् प्रविलोक-
नाद्वा भीतिर्ध्रुवा वंचनचोरभूपैः ॥ राहौ विलग्ने सकुजेऽर्कपुत्रे राहौ बृहद्बीजमिहाहुरार्याः ॥७६॥
लग्नेश्वरे मृत्युगते सराहौ रंध्रे समांदौ तु तथैव वाच्यः ॥ लग्ने सराहौ गुलिके त्रिकोणे रंध्रे कुजे
मांदियुते तथैव ॥७७॥ लग्नेश्वराक्रांततदंशनाथो राह्वारमांद्यादिभिरन्वितश्चेत् ॥ तस्मिन्बृहद्बी-
जमिहाष्टमेशसंयुक्तराश्यंशपतिः सराहुः ॥ ७८ ॥ लग्नेश्वरे भूमिसुते तनुस्थे पापान्विते पापवि-
लोकिते वा ॥ शिलाप्रहारैर्व्रणमुत्तमांगे खड्गादिभिर्वा कथयंति तज्ज्ञाः ॥ ७९ ॥ शनिस्तथा
चेद्व्रणमुत्तमांगे वाताग्निशस्त्रैः पतनेन वापि ॥ यदा भवेत्पंचघटीविलग्ने तदा बृहत्को न तदर्धलग्ने

॥ ८० ॥ आहुर्बृहत्को मुनयस्तदूनलग्ने शिरः संकुचितं तु तज्ज्ञाः॥ शुष्के खगे लग्नगते विलग्ने
शुष्के यदा देहकृशत्वमाहुः ॥ ८१ ॥ लग्नेश्वरे शुष्कयुते तथैव शुष्कग्रहाणां भवनस्थिते वा ॥
लग्नाधिपे नाशगते तु शुष्कराशौ तनौ शुष्कमतीव कष्टम् ॥८२॥ लग्नाधिपस्थांशपराशिनाथः
शुष्कग्रहस्थस्तनुशुष्कमाहुः ॥ शुष्के विलग्ने बहुपापयुक्ते तत्रापि देहस्य कृशत्वमाहुः ॥ ८३॥
लग्ने जलर्क्षे शुभखेचरेंद्रैर्युक्ते तनुस्थौल्यमुदाहरंति ॥ लग्नाधिपस्तोयखगो बलाढ्यः सौम्या-
न्वितश्चेत्तनुपुष्टिमाहुः ॥ ८४ ॥ लग्नाधिपश्चेज्जलराशिसंस्थः शुभान्वितस्तोयखगेन दृष्टः ॥ लग्ने
शुभक्षेत्रगतेऽपि चैवं लग्नेश्वरस्यांशपतौ जलर्क्षे ॥ ८५ ॥ पापग्रहाणां च दृशा विहीने लग्ने
शुभक्षेत्रगतेऽपि चैवम् ॥ लग्ने गुरौ तेन निरीक्षिते वा जलर्क्षगेणापि जले विलग्ने ॥ ८६ ॥
सौम्यान्विते शोभनखेचरेंद्रैर्दृष्टे त्वतिस्थौल्यमुदाहरंति ॥ लग्ने शनौ राहुयुतेऽथवा स्यात्पिशा-
चबाधां प्रवदंति संतः ॥ ८७ ॥ लग्ने रविर्भूमिसूतेन दृष्टः श्वासं क्षयं विद्रधिगुल्मभाजम् ॥
भौमे विलग्ने शनिसूर्यदृष्टे खड्गादिभिः पीडितदेहभाक् स्यात् ॥ ८८ ॥ केतौ विलग्ने बहुपाप-
दृष्टे पिशाचचोरैर्भवति ध्रुवं भीः ॥ लग्ने चरे तद्भवनेश्वरे वा चरस्थिते संचरति प्रजातः ॥८९॥
संचारशीलश्चरभे विलग्ने लग्नांशके चैवमुदाहरंति ॥ विदेशभाग्यं चरभे विलग्ने चरे तदीशे चर-

खेटदृष्टे ॥ ९० ॥ स्थिरे स्वदेशे बहुभाग्ययुक्तः स्थिरग्रहैर्भूरिधनान्वितः स्यात् ॥ मिश्रैर्ग्रहैः संयुतभाग्यकीर्तिर्नानाप्रदेशे प्रचरन् कुमार्गी ॥ ९१ ॥ लग्नेश्वरे वीर्ययुते स्वतुंगे गंभीरगामी पुरुषोऽन्यथा स्यात् ॥ हीने तदीशे सजडः शुभैस्तु दृष्टे युते वा न तथाविधे तत् ॥९२॥ लग्ने शुभे शोभनदृष्टियुक्ते बाल्यात्सुखं तन्नहि पापयोगात् ॥ दुःखी भवेत्पापबहुत्वयोगे लग्ने तु बाल्यान्मरणांतकालः ॥ ९३ ॥ वर्गोत्तमांशे यदि लग्ननाथे स्वोच्चांशके वा स्वसुहृद्दृकाणे ॥ शुभान्विते वा शुभदृष्टियाते नरो भवेदामरणांतसौख्यः ॥ ९४ ॥ लग्नांत्यलाभे शुभखेचरेंद्रे लग्नेश्वरे केंद्रगते बलाढ्ये ॥ सिंहासनांशे यदि देवपूज्ये जातो भवेदादिममध्यसौख्यः ॥ ९५ ॥ लग्नार्थसोत्थे शुभदृष्टियोगे लग्नेश्वरे शोभनखेचरेंद्रे ॥ पारावतांशे यदि दानवेज्ये जातो भवेदादिममध्यसौख्यः ॥ ९६ ॥ बाल्ये सुखी स्यात्त्रिदशेंद्रपूज्ये केंद्रे यदा लग्नपतिर्बलाढ्यः ॥ पारावतांशे यदि लग्ननाथे स्त्रीपुत्रमित्रार्थसुखान्वितोयम् ॥ ९७ ॥ देवलोकांशगे शुक्रे लग्नेशे गोपुरांशके ॥ लग्ने शुभग्रहैर्दृष्टे मध्यांते सुखमाप्नुयात् ॥ ९८ ॥ लग्ने शुभे धने पापे केंद्रे पापसमन्विते ॥ लग्नेश्वरे तूत्तमांशे आदौ दुःखं ततः सुखम् ॥ ९९ ॥ लग्ने पापे धने सौम्ये भाग्ये कश्चिच्छुभग्रहः ॥ लग्नेशे देवलोकस्थे बाल्ये सौख्यमतोऽन्यथा ॥ १०० ॥ लग्नेश्वरे कर्मगते

दिनेशे लग्नान्विते शोभनखेचरेंद्रैः ॥ योगे प्रदृष्टे तनुपे स्वतुंगे सत्कीर्तिमाहुर्मुनयोऽत्र तज्ज्ञाः
॥१॥ पापे विलग्नेंशपतौ सराहौ केंद्रस्थिते कर्मणि पापखेटे ॥ नीचग्रहे लग्नगतेऽर्कदृष्टे दुष्की-
र्तियुक्तः स भवेत्तदानीम् ॥ २ ॥ [1]आरोहवीर्ये तु विलग्ननाथे भाग्याधिपे तादृशवीर्ययुक्ते ॥ वि-
ख्यातकीर्तिः प्रभवो नरस्तु शुभग्रहेणापि समन्विते स्यात् ॥ ३ ॥ आदौ वयसि पूर्वार्धे सौख्यं
लग्ने भृगोः सुते ॥ दुःखं तु परभागे च बंधौ पापे सुते तथा ॥४॥ लग्नाधिपे शुभयुते यदि तुंग-
भागे केंद्रत्रिकोणसहिते शुभदृष्टियुक्ते ॥ कर्माधिपेन सहिते यदि वा स्वगेहे सद्भाग्यकीर्तिधन-
धान्यचिरायुरेति ॥ ५ ॥ लग्नाधिपोऽतिबलवानशुभैरदृष्टः केंद्रस्थितः शुभखगैरवलोक्यमानः ॥
मृत्युं विधूय विदधाति सुदीर्घमायुः सार्धं गुणैर्बहुभिरूर्जितया च लक्ष्म्या ॥ ६ ॥ केंद्रत्रिको-
णनिधनेषु न यस्य पापा लग्नाधिपः सुरगुरुश्च चतुष्टयस्थः ॥ भुक्त्वा सुखानि विविधानि सुपु-
ण्यकर्मा जीवेच्च वत्सरशतं स विमुक्तरोगः ॥ ७ ॥ लग्नेश्वरादतिबली निधनेश्वरोऽसौ केंद्रस्थि-
तैर्निधनारिःफगतैश्च पापैः ॥ तस्यायुरल्पमथवा यदि मध्यमायुरुत्साहसंकटवशात्परमायुरेति
॥ ८ ॥ एकांशकस्था बुधशुक्रमंदा धर्मे स्थिता लग्नमुपागता वा ॥ षष्ठाष्टमे वा हिमगुश्च यस्य

१ उच्चाभिलाषिणि लग्ननाथे उच्चाभिलाषिणि भाग्याधिपे सति ।

सहस्रवर्षद्वयमस्य जंतोः ॥ ९ ॥ जीवांशकस्थाः सकला ग्रहेंद्रा केंद्राश्रिता धर्मधनाश्रिता वा ॥ जातो नरः प्रव्रजितः स बाल्ये युगांतमायुर्बहुशास्त्रकर्ता ॥ ११० ॥ मदांशकस्था रविभौमजीवा कर्माश्रिता धर्मयुता बलाढ्याः ॥ राशेः समातौ हिमगौ विलग्ने युगांतमायुः श्रियमादधाति ॥ ११ ॥ धर्मेश्वरे धर्मगते च यस्य भौमांशकस्थे हिमगौ च दृष्टे ॥ मुनीश्वरोऽयं मुनियोगजातः शास्त्रार्थकर्ता युगमादधाति ॥ १२ ॥ लग्नेशे धनराशिस्थे लग्नेशस्थांशपेऽपि वा ॥ तथा स्थिते लाभनाथे विंशद्वर्षात्परं सुखम् ॥ १३ ॥ लग्नेशस्थांशनाथे तु केंद्रकोणोच्चसंयुते ॥ लाभेशे वा तथा युक्ते त्रिंशद्वर्षात्परं सुखम् ॥ १४ ॥ लग्नेशे शुभराशिस्थे शुभग्रहनिरीक्षिते ॥ गोपुरांशगते वापि षोडशाब्दात्परं सुखम् ॥१५॥ ग्रहयोगेक्षणाभ्यां तु बलाबलवशादपि ॥ लग्नस्यैवं फलं प्रोक्तं श्रीमद्व्यंकटशर्मणा ॥११६॥ इति सर्वार्थचिंतामणौ द्वितीयोऽध्यायः समाप्तः ॥२॥

कौटुंबाद्वर्तव्यान् मुखं च वाग्दक्षिणाक्षिपूर्वार्थान् ॥ विद्याभुक्तिविशेषान् दासान्मित्राणि च प्रवदेत् ॥ १ ॥ लग्नेश्वरेण सहिते यदि वित्तनाथे दुःस्थेऽक्षिनाशनमथास्फुजिदिंदुयुक्ते ॥ नेत्रेश्वरे[1] तनुगते यदि नैशिकांधः स्वोच्चे शुभग्रहयुतेन तथा वदंति ॥ २ ॥ भान्वच्छलग्नपातिभिः सहिते

१ स्वान्त्यौ नेत्रसंज्ञौ तेन द्वितीयभावपतौ द्वादशभावपतौ चेति ।

 

तंदीशे जात्यंधको भवति रंध्रव्रणांत्यगेऽपि ॥ रिःफे धरासुतगते नयनं हि वामं नाशं तदा व्रजति सूर्यसुते तदन्यत् ॥ ३ ॥ चंद्रार्कसंयुक्तहरौ विलग्ने शन्यारदृष्टेऽक्षिविनाशमाहुः ॥ शुभाशुभैर्बुद्बुदलोचनः स्याच्छुभैर्न दोषः सहितेक्षणाभ्याम् ॥ ४ ॥ निमीलिताक्षश्च धने सपापे तदीश्वरे शोभनदृष्टियुक्ते ॥ लग्नाधिपे पापबहुत्वयोगे यमेन दृष्टे स तु रोगनेत्रः ॥ ५ ॥ नेत्रे शुभे तद्भवनेश्वरे वा सौम्यान्विते कारकखेचरेंद्रे ॥ लग्नेश्वरेणापि युतेऽथ दृष्टे विशालदृष्टिः स नरो विशेषात् ॥ ६ ॥ शन्यारयोगे गुलिकेन युक्ते नेत्रेश्वरे तत्र तु नेत्ररोगः ॥ [३]नेत्रे यदा पापबहुत्वयोगे यमेन दृष्टे सति रुग्णनेत्रः ॥ ७ ॥ [४]नेत्रेश्वरस्थांशपतौ सपापे पापग्रहक्षेत्रगते तथैव ॥ नेत्राधिपे वासरनायके तु धरासुते वा गुलिकार्कदृष्टे ॥ ८ ॥ उष्णोद्भवेनाप्यथ पित्तकासैर्नेत्रस्य रोगो भवति प्रमादैः ॥ अव्याजरोगैर्नयनस्य रोगं तत्स्थानपे दुःस्थगते ससौम्ये ॥ ९ ॥ सहोदरात्मोद्भवशत्रुगेहे कलत्रमित्रादि लभेत्तथैव ॥ रव्यारयुक्ते सति नेत्रनाथे दृष्टे

१ तदीशे द्वितीयपतौ द्वादशपतौ च । २ नेत्रे द्वितीयभावे द्वादशभावे च । ३ नेत्रे द्वितीये द्वादशे । ४ नेत्रेश्वरस्थांशपतौ द्वितीयभावपतिनवांशपतौ द्वादशभावपतिनवांशपतौ । ५ द्वितीयभावपतौ द्वादशभावपतौ । ६ तत्स्थानपे द्वितीयद्वादशपतौ । ७ नेत्रनाथे द्वितीयद्वादशपतौ ।

तु ताभ्यां नयनांतरक्तः ॥ १० ॥ सौम्यग्रहो कारकभावनाथौ स्यातां शुभा दृष्टिरसौम्यता तु ॥ पापग्रहैर्वीक्षणयोगतश्च पित्रादिकानां फलमेवमाहुः ॥ ११ ॥ कुटुंबराशेरधिपे ससौम्ये केंद्रस्थिते स्वोच्चसुहृद्गृहे वा ॥ सौम्यर्क्षयुक्ते यदि जातपुण्यः कुटुंबसंरक्षणवाग्विलासः ॥ १२ ॥ स्वोच्चस्थिते शोभनखेचरेंद्रे कुटुंबराशौ शुभवीक्षिते वा ॥ अनेकसंरक्षणजातपुण्यो लग्नेश्वरे वीर्ययुते स्वतुंगे ॥ १३ ॥ गुरौ कुटुंबे स्वपतौ यदि स्याद् भृगौ बुधे तादृशभावनाथे ॥ स्वोच्चे सुहृत्क्षेत्रगतेऽथ बंधौ परोपकारी जनरक्षकः स्यात ॥ १४ ॥ पापे तु तद्राशिपतौ तदानीं पापेक्षिते पापयुते स्वतुंगे ॥ लग्नेश्वरे हीनबले सपापे स्वजीवनोपायसहायको न ॥ १५ ॥ पापे बहुत्वे स्वकुटुंबराशौ पापेक्षिते हीनबले तदीशे ॥ दुःस्थे विलग्नाधिपतौ सपापे स्वजीवनं नास्ति सुखेन तस्य ॥ १६ ॥ पत्यौ कुटुंबस्य तृतीयराशौ स्थिते यदा पुंग्रहसौम्यदृष्टे ॥ शुभस्थिते खेचरनायके स्यात्स्वतुंगगे सर्वजनावनीशः ॥ १७ ॥ तन्नाथे गोपुरांशस्थे कुटुंबेशांशपे शुभे ॥ सिंहासनांशके वापि पंचाशज्जनरक्षकः ॥ १८ ॥ स्वोच्चत्रिकोणायगते कुटुंबराशेः पतौ लग्नपतौ बलाढ्ये ॥ कुटुंबनाथस्थितराशिनाथे केंद्रस्थिते सर्वजनावनीशः ॥ १९ ॥ द्वितीये पापसंयुक्ते कुटुंबेशे तथा स्थिते ॥ पापग्रहेण संदृष्टे दुर्घटे भावनं लभेत् ॥ २० ॥ आविंशते रक्षकः स्यात्

कुटुंबेशे शुभैर्युते ॥ पारावतांशके तस्मिन् धने चंद्रसमन्विते ॥ २१ ॥ स्वोच्चे सुहृद्भे स्वगृहे तदीशे सिंहासने तद्भवनेश्वरे वा ॥ पारावतांशे गुरुदृष्टियुक्ते शतत्रयं शासति जातपुण्यः ॥२२॥ कुटुंबनाथे परमोच्चयुक्ते देवेंद्रपूज्येन समीक्षिते वा ॥ तथाविधे तद्भवनेऽपि जातः सहस्ररक्षो भवति प्रतापैः ॥ २३ ॥ सिंहासनांशे त्रिदशेशपूज्ये शुक्रे पुनर्गोपुरसंयुते तु ॥ ऐरावतांशे धनपे बलाढ्ये जातस्त्वसंख्याजनरक्षकः स्यात् ॥ २४ ॥ मुखेशे केंद्रभावस्थे शुभग्रहनिरीक्षिते ॥ मुखे सौम्ययुते वापि सुमुखः स नरो भवेत् ॥ २५ ॥ प्रफुल्लवदनः श्रीमान् केंद्रे मुखपतौ यदा ॥ स्वोच्चमित्रस्ववर्गस्थे तन्नाथे गोपुरांशके ॥ २६ ॥ पापैर्युते मुखस्थाने तन्नाथे पापसंयुते ॥ नीचराशिगते वापि दुर्मुखः पापवीक्षिते ॥ २७॥ क्रोधयुक् स नरः पापी तदीशे गुलिकान्विते ॥ पापयोगबहुत्वेऽस्मिन्नीचशत्रुवशंगतः ॥ २८ ॥ वाक्स्थानपे सौम्ययुते त्रिकोणे केंद्रस्थिते तुंग-समन्विते वा ॥ शुभेक्षिते पुंग्रहयोगयुक्ते वाग्मी भवेद्युक्तिसमन्वितोऽसौ ॥ २९ ॥ वाक्स्थानपे देवपुरोहितेन युक्ते यदा नाशगतेऽत्र मूकः ॥ पित्रादिकानामियमेव रीतिरुक्ता मुनींद्रैर्बहुशा-स्त्रविद्भिः ॥ ३० ॥ वाचालकः केंद्रगते तदीशे पारावतांशे परमोच्चभागे ॥ सिंहासने देवगुरौ भृगौ वा वर्गोत्तमे सोमसुतेन युक्ते ॥ ३१ ॥ वागीशस्थांशपे सौम्ये स्वोच्चे शुभसमन्विते ॥

गोपुरांशगते वापि वाग्मी पटुतरो भवेत् ॥ ३२ ॥ वागीशोपि बलान्वितः शुभयुतो वर्गोत्त-
मांशेऽपि वा वाग्मी स्याद्भवनेश्वरो गुरुयुतः पारावतांशेऽपि वा ॥ तन्नाथो भृगुणा बुधेन सहि-
तस्त्वैरावतांशे तथा स्वोच्चे स्वे सुहृदां गृहे धनपतौ वाक्स्थानकोलाहलः ॥ ३३ ॥ सभाजडो
वागधिपः सपापः कर्मस्थितो नीचगतोऽर्कयुक्तः ॥ मांद्यान्विते वाग्भवनेऽर्कयुक्ते पापैस्तु दृष्टे स
जडोऽत्र जातः ॥ ३४ ॥ केंद्रे बुधे वागधिपे बलाढ्ये शुक्रे धनभ्रातृगते ससौम्ये ॥ स्वोच्चे धने
दानवपूजिते वा ज्योतिर्विदां श्रेष्ठतमो नरः स्यात् ॥ ३५ ॥ गणितज्ञो भवेज्जातो वाग्भावे भूमि-
नदने ॥ ससोमे बुधसंदृष्टे केंद्रे वा सोमनंदने ॥ ३६ ॥ वाग्भावपे बुधे स्वोच्चे लग्ने देवेंद्रपूजिते ॥
शनावष्टमसंयुक्ते गणितज्ञो भवेन्नरः ॥३७॥ केंद्रत्रिकोणगे जीवे शुक्रे स्वोच्चगते सति ॥ वाग्भा-
वपेंदुपुत्रे वा गणितज्ञो भवेन्नरः ॥ ३८ ॥ वाग्भावपे रवौ भौमे गुरुशुक्रनिरीक्षिते ॥ पारावतां-
शगे सौम्ये तत्तद्युक्तिपरायणः ॥ ३९ ॥ गुरुशुक्रौ धनेशौ चेद्रविभौमनिरीक्षितौ ॥ मूलत्रिको-
णतुंगे वा तर्कशास्त्रविदांवरः ॥ ४० ॥ संपूर्णबलसंयुक्ते गुरौ तद्भवनेश्वरे ॥ दिनेशभृगुसंदृष्टे
शाब्दिकोऽयं नरो भवेत् ॥ ४१ ॥ वाग्भावपे बुधे स्वोच्चे गोपुरांशगते शनौ ॥ सिंहासने गुरौ
वापि वेदांतज्ञो भवेन्नरः ॥ ४२ ॥ वेदांतपारिशीलः स्यात् केंद्रकोणे गुरौ सति ॥ बुधेन गुरुणा

दृष्टे शनौ पारावतांशके ॥ ४३ ॥ उत्तमांशे भृगौ लग्ने केंद्रे वा तद्विधे भृगौ ॥ देवलोकगते चंद्रे वेदांतज्ञानपारगः ॥ ४४ ॥ षट्शास्त्रवल्लभः केंद्रे जीवे दानवपूजिते ॥ सिंहासने गोपुरांशे वाग्भावस्थांशके बुधे ॥ ४५ ॥ विप्रलंभो धनेशस्य राशीशस्थांशपे शनौ ॥ सपापे केंद्रकोणे वा भौमेऽप्येवं विनिर्दिशेत् ॥ ४६ ॥ परिहासकरो नित्यं भानुस्थितनवांशपे ॥ वाग्भावस्थे बलाढ्ये तु तस्मिन्वैशेषिकांशके ॥ ४७ ॥ गुरौ बलाढ्ये धनराशियुक्ते तदीश्वराक्रांतनवांशनाथे ॥ केंद्रत्रिकोणे शुभवीक्षिते वा क्रमांतविच्छास्त्रपरायणश्च ॥ ४८ ॥ लग्नेश्वरे धनस्थे लग्ने वा सौम्यसंयुते तुंगे ॥ पारावते तदीशे जातो निगमांतविद् व्यये शुक्रे ॥ ४९ ॥ लग्नेश्वरस्थांशपतिस्थराशिनाशास्थितांशाधिपतौ बलाढ्ये ॥ वैशेषिकांशे शुभदृष्टियुक्ते योगे बहुत्वे धनलाभमाहुः ॥ ५० ॥ वित्तेश्वरेण सहिते भवराशिनाथे कर्माधिपस्थनवभागपदृष्टियुक्ते ॥ वैशेषिकांशकयुते परमोच्चभागे योगे बहुत्वधनलाभमिहाहुरार्याः ॥ ५१ ॥ धर्माधिपेन सहिते धनराशिनाथे लग्नेश्वरस्थितनवांशपतीश्वरेण ॥ दृष्टे चतुष्टयगते शुभदृष्टियोगे जातस्तु भूरिधनलाभमुपैति बाल्ये ॥ ५२ ॥ लग्नार्थलाभभवने शुभखेचरेंद्रे स्वोच्चे सुहृद्गृहगतेऽत्र विशेषितांशे ॥ तुंगांशके धनपतिस्थनवांशनाथदृष्टे बहुत्वधनलाभमुपैति बाल्ये ॥ ५३ ॥ लग्नेशे धनराशिस्थे ध-

नेशे लाभराशिगे ॥ लाभेशे वापि लग्नस्थे बहुनिध्यादिकं भवेत् ॥५४॥ सर्वग्रहादतिबली यदि लग्ननाथः केंद्रस्थितस्त्रिदशपूजितसंयुतश्च ॥ वैशेषिकांशकयुते धनराशिनाथे वित्तं स्ववीर्यबलतोऽर्जितमाहुरार्याः ॥ ५५ ॥ लग्नेशसंयुतनवांशपतिस्थराशिनाथो बलेन सहितो धनपस्य मित्रम् ॥ केंद्रत्रिकोणसहितः स्वगृहेऽथ यद्वा जातः स्ववीर्यधनमेति बहुप्रकारैः ॥ ५६ ॥ वित्तेश्वरो लाभविलग्नपाभ्यां युक्तस्त्रिकोणे यदि केंद्रराशौ ॥ शुभेक्षितः कालबलान्वितश्च जातः स्ववीर्याद्धनमेति मध्ये ॥ ५७ ॥ अंत्ये धनं याति धनेशयुक्तराशौ विलग्नेशयुते ससौम्ये ॥ तदीश्वरे लग्नगते बलाढ्ये लाभेश्वरादेवमुदाहरंति ॥ ५८ ॥ तृतीयराशौ धनलग्ननाथौ बलान्वितौ पुंग्रहदृष्टियुक्तौ ॥ तदीश्वरेणापि युतौ प्रदृष्टौ भ्रातुर्धनं याति विशेषितांशे ॥ ५९ ॥ तृतीयभावाधिपतौ धनस्थे तत्र स्थिते कारकखेचरेंद्रे ॥ दृष्टे युते वा तनुपेन जातो भ्रातुर्धनं याति विशेषितांशे ॥ ६० ॥ परस्परं वित्तपलग्ननाथौ निरीक्षितौ केंद्रयुतौ शुभांशे ॥ निरीक्षितौ लग्नशुभेश्वराभ्यां जातो धनं याति बहुप्रकारैः ॥ ६१ ॥ वित्तेश्वरं पश्यति लग्ननाथे युते स्ववीर्याद्धनमेति जातः ॥ तृतीयभावाधिपकारकाभ्यां दृष्टे युते तादृशमेति वित्तम् ॥ ६२ ॥ दृष्टे युते वित्तपतौ बलाढ्ये सुखेश्वरेणापि धनं जनन्याः ॥ बंधोः सकाशादथवा कृपेश्च धनं प्रयात्यत्र

विशेषितांशे ॥ ६३ ॥ दृष्टे युते वित्तपतौ धनस्थे तत्र स्थिते कारकखेचरेंद्रे ॥ दृष्टे युते वा तनुपेन जातो भ्रातुर्धनं याति विशेषितांशे ॥ ६४ ॥ पुत्रेशतत्कारकखेचराभ्यां तथाविधे वित्तपतौ बलाढ्ये ॥ दृष्टे युते लग्नपतौ बलाढ्ये वैशेषितांशे सुततो धनं स्यात् ॥ ६५ ॥ वैशेषितांशे यदि लग्ननाथे जातः स्वपुत्रार्जितमेव वित्तम् ॥ षष्ठेशतत्कारकखेचराभ्यां तथाविधे वित्तपतौ बलाढ्ये ॥ ६६ ॥ शत्रोः सकाशात्तु धनं प्रयाति वैशेषिके लग्नपतौ बलाढ्ये ॥ कलत्रतत्कारकयोस्तथैव वित्तं कलत्राल्लभते हि जातः ॥ ६७ ॥ पितुर्धनं कारकभावपाभ्यां गुरोः सकाशादपि धर्ममूलात् ॥ कर्मेशतत्कारकदृष्टियोगाद्धनं स्वदानग्रहणात्स्वकीर्त्या ॥ लाभेशतत्कारकदृष्टियोगादेवं वदंत्यत्र धने बहुत्वम् ॥ ६८ ॥ धने पापग्रहाः प्रोक्ता बलाढ्यास्ते तथा भवेत् ॥ नीचारिमूढभावस्थैर्दृग्योगात्खेचरैरपि ॥ ६९ ॥ तत्तद्भावाधिपैर्वित्तनाशस्तन्मुखतो भवेत् ॥ सहोत्थबंधुपुत्रारिकलत्रादेरयं क्रमः ॥७०॥ लग्नाधिपे हीनबले सपापे रिःफे धनेशे दिननाथयुक्ते ॥ नीचस्थिते वा शुभदृष्टियुक्ते जातस्य वित्तं हरति क्षितीशः ॥ ७१ ॥ व्ययेशे धनभावस्थे रिःफस्थे लाभनायके ॥ दुःस्थे धनेशे नीचे वा राजदंडाद्धनक्षयः ॥ ७२ ॥ धनेशे नाशराशिस्थे सपापे नीचराशिगे ॥ राजकारकसंयुक्ते राजदंडाद्धनक्षयः ॥ ७३ ॥ धनव्ययेशौ

व्ययवित्तसंस्थौ लग्नेश्वरेणापि निरीक्षितौ चेत् ॥ लग्नाधिपे नाशगते सपापे राज्ञां प्रकोपाद्धन-
नाशमाहुः ॥ ७४ ॥ कर्मेश्वरे लाभगते विलग्ननाथेन युक्ते यमकंटकांशे ॥ दंष्ट्राकरालांशगतेऽ-
थवापि राज्ञां प्रकोपाद्धननाशमाहुः ॥ ७५ ॥ धनायपौ भूमिजदृष्टियुक्तौ क्रूरांशगौ हीनबलौ
सपापौ ॥ चोरादिभावाधिपदृष्टियुक्तौ चोराग्निभूपैर्धननाशमेति ॥ ७६ ॥ कर्मेश्वरे नाशगते सपापे
क्रूरादिषष्ट्यंशयुते विशेषात् ॥ धनायपाभ्यां सहिते तदानीं लोकापवादाद्धननाशमाहुः ॥ ७७ ॥
वित्तेशसंयुक्तनवांशनाथयुक्तांशकस्थानपतौ सपापे ॥ दुःस्थे विलग्नेश्वरदृष्टियुक्ते चोराग्निभूपै-
र्धननाशमेति ॥ ७८ ॥ धनेशस्य नवांशस्थनाथो दुःस्थोऽथ पापयुक् ॥ क्रूरांशकगतो वापि
निर्धनोयं भवेन्नरः ॥ ७९ ॥ धने क्रूरादिसंयुक्ते तदीशे पापसंयुते ॥ तथैव लाभराशीशे धनहीनो
भवेन्नरः ॥ ८० ॥ व्ययेशसंयुक्तनवांशनाथो युक्तो धनेशेन निरीक्षितो वा ॥ नीचार्कगो हीनबलः
सपापः केंद्रस्थितश्चेदपि निर्धनः स्यात् ॥ ८१ ॥ धनेशाश्रितराशीशसंयुक्तांशपतिर्यदि ॥
कालदंडाद्यंशयुक्तेऽनिर्धनोऽयं भवेन्नरः ॥ ८२ ॥ यत्किंचिद्धनसंयुक्तो धनेशे केंद्रकोणगे ॥
क्रूरषष्ट्यंशसंयुक्ते नीचस्थेऽर्कयुतेऽपि वा ॥ ८३ ॥ यत्किंचिद्वित्तमायाति लाभेशस्थांशराशिपे ॥
गुरुणा भृगुणा दृष्टे क्रूरषष्ट्यंशसंयुते ॥ ८४ ॥ लाभलग्ने धनेशानां युक्तांशाः क्रूरसंज्ञकाः ॥ केंद्र-

त्रिकोणयुक्तानामुत्पन्नो धनिको भवेत् ॥ ८५ ॥ वैशेषिकांशे धनपे स्वोच्चमूलत्रिकोणगे ॥ क्रूर-
षष्ट्यंशसंयुक्ते लाभेशे सर्वनाशभाक् ॥ ८६ ॥ उत्पन्नो धनिको लग्ननाथे वैशेषिकांशके ॥ धनेशे
क्रूरषष्ट्यंशे चोक्तौ केंद्रगतौ तथा ॥ ८७ ॥ सद्यो धनी धनेशेन कर्मनाथो युतो यदि ॥ कर्मेश-
स्थांशपतिना लाभनाथस्तथाविधः ॥ ८८ ॥ लग्नेशे धनराशिस्थे लाभेशे कर्मसंयुते ॥ धनेश-
स्थांशपे सौम्ये धनिको नागतो भवेत् ॥ ८९ ॥ सहस्रनिष्कभर्ता स्याल्लग्नेशस्थनवांशपे ॥
धनेशस्थांशपे सौम्ये गुरुणा वा निरीक्षिते ॥ ९० ॥ लग्नेशे धनराशिस्थे लाभेशे कर्मसंयुते ॥
लाभाधिपेन संदृष्टे गुरुणा वा निरीक्षिते ॥ ९१ ॥ सहस्रनिष्कभर्ता स्याल्लग्नेशस्थनवांशपे ॥
गोपुरांशगते कर्मनाथेन सति वीक्षिते ॥ ९२ ॥ कर्मेशसंयुक्तनवांशनाथसंयुक्तसतांशपतौ
बलाढ्ये ॥ शुक्रेण देवेंद्रपुरोहितेन दृष्टे सहस्रद्वयनिष्कभर्ता ॥ ९३ ॥ सौम्यषष्ट्यंशसंयुक्ते धन-
लाभे बलान्विते ॥ तदीशेऽपि तथायुक्ते सहस्रत्रयनिष्कयुक् ॥ ९४ ॥ वैशेषिकांशगे वित्तनाथे
गुर्विंदुभास्करे ॥ तथाविधो भवेशोऽपि बलवांश्चेत्तथा धनी ॥ ९५ ॥ धनस्थेशदृकाणेशसंयुक्त-
नवभागपः ॥ सर्वोत्तमबलोपेतस्त्वष्टसाहस्रनिष्कयुक् ॥ ९६ ॥ लग्नेशस्थदृकाणेशसंयुक्तमुनि-
भागपः ॥ वैशेषिकांशकगतस्त्वयुतं धनमाप्नुयात् ॥ ९७ ॥ व्यये शुक्रे धने जीवे स्वांशे वैशे-

षिकांशके ॥ लग्नेशेऽपि तथा युक्ते तदूर्ध्वमुपयाति सः ॥ ९८ ॥ गुरौ लग्नेशसंयुक्ते धने वैशेषि-
कांशके ॥ केंद्रत्रिकोणगे वापि तदूर्ध्वं वित्तमश्नुते ॥ ९९ ॥ कर्मेशस्थदृकाणस्थनाथसंयुक्तस-
प्तपः ॥ ऐरावतांशसंयुक्तो धनलक्षं समश्नुते ॥ १०० ॥ लक्षद्वयं धनं याति चतुष्केंद्रे शुभा-
न्विते ॥ सिंहासने धनेशेऽपि साति पारावतांशके ॥ १ ॥ लक्षत्रयाधिकारी स्याल्लाभलग्नधनाधिपे ॥
वैशेषिकांशकगते मृदंशादियुतेऽथवा ॥ २ ॥ तदूर्ध्वं वित्तपः स्यात्तु धनलाभपती यदा ॥ वृद्धि-
केंद्रगतौ तौ चेद्बलिनौ भाग्यपस्तथा ॥ ३ ॥ केंद्रत्रिकोणभे वीर्यस्त्वथवा भवनाथयुक् ॥ वैशेषि-
कांशगश्चेत्तु धनलक्षं समश्नुते ॥ ४ ॥ लग्नांशनाथभाग्येशाः परमोच्चांशसंयुताः ॥ वैशेषिकांशे
लाभेशे तदा कोटीश्वरो भवेत् ॥ ५ ॥ ऋणप्रदो विलग्नेशसंयुक्तनवभागपः ॥ दृष्टो देवेंद्रगुरुणा
मृदंशादिसमन्वितः ॥ ६ ॥ वित्तलाभपसंयुक्तत्र्यंशकेशनवांशपः ॥ वैशेषिके केंद्रकोणे ऋण-
दाता भवेन्नरः ॥ ७ ॥ ऋणग्रस्तो धने पापे लग्नेशे व्ययसंयुते ॥ कर्मेशे लाभनाथेन युते दृष्टे
विशेषतः ॥ ८ ॥ दिनेशकरलुप्तस्तु धनेशो नीचराशिगः ॥ पापान्विते धने रंध्रे ऋणग्रस्तो
भवेन्नरः ॥ ९ ॥ धनेशे नीचराशिस्थे क्रूरषष्ट्यंशसंयुते ॥ लाभेशेऽपि तथा युक्ते ऋणग्रस्तो
भवेन्नरः ॥ ११० ॥ लाभेशस्थितभांशेशनाथे दुःस्थे शुभान्विते ॥ क्रूरषष्ट्यंशसंयुक्ते ऋण-

ग्रस्तो भवेन्नरः ॥ ११ ॥ वाक्स्थानपे षष्ठगते सराहौ राहुस्थितर्क्षाधिपसंयुते वा ॥ दंतस्य रोगः
पतनं च तेषां भुक्तौ तयोर्वा प्रवदंति तज्ज्ञाः ॥ १२ ॥ वाक्स्थानपेनापि युतोऽरिनाथस्तद्भाव-
पस्थांशपयुक्तनाथः ॥ षष्ठेश्वरेणापि युतः स्वभुक्तौ दंतादिरोगः पतनं च तेषाम् ॥ १३ ॥
वाक्स्थानपेनापि युतोर्कपुत्रः पापैर्युतो वातभयात् प्रमादः ॥ सूर्यस्तु कोपाद्भवति प्रमादो राज्ञां
कुजे चोष्णभयात्प्रकोपः ॥ १४ ॥ तदीश्वरेणापि युतेंदुपुत्रे सराहुकेतावरिभावयुक्ते ॥ राहुस्थि-
तर्क्षाधिपसंयुते वा भुक्तौ तदा तालुभवः सरोगः ॥ १५ ॥ राजारिनाथौ तनुभावयुक्तौ साच्छा-
क्षिपौ भूमिपतेः प्रकोपात् ॥ उत्पाटनं नेत्रमुशंति तज्ज्ञा नीचांशगौ पापयुतौ तथैव ॥ १६ ॥
राजारिनाथस्थितभांशकेशौ दुःस्थौ विलग्नेशयुतौ तथैव ॥ साच्छाक्षिपौ नाशगतौ तथैव
शुभैर्न दृष्टौ नयनप्रमादः ॥ १७ ॥ तद्भावपाभ्यामथ कारकाभ्यां पित्रादिकानां फलमेवमाहुः ॥
कर्णस्य विच्छेदनमाहुरार्याः सौरे सभौमे धनपे विलग्ने ॥ रोगाधिपे वित्तपतौ विलग्ने नाश-
स्थिते मंदसुतारयुक्ते ॥ १८ ॥ पित्रादिकानां फलमेवमूह्यं तत्स्थाननाथग्रहकारकेभ्यः ॥ भुक्ती-
श्वरे ह्यच्छनिशाकराभ्यां केंद्रे युते राजतमत्र पात्रम् ॥ १९ ॥ सचंद्रपुत्रामरनाथपूज्ये केंद्र-

१ शुक्रद्वितीयद्वादशभावपौ ।

स्थिते स्वर्णमयं हि पात्रम् ॥ तदीश्वरे कोणचतुष्टये वा वैशेषिकांशे यदि तादृशं तत् ॥१२०॥
मृदंशके वा परमोच्चभांशे स्थिते तदीशे यदि तादृशं तत् ॥ स्वांशादिकानां परमोच्चराशौ
शशांकजीवाच्छविदां यदंशे ॥ २१ ॥ वीर्यान्वितो भुक्तिपतिस्तदंशे भुक्तेस्तु पात्रं सदृशं हिर-
ण्यम् ॥ मृदंशके भुक्तिपतौ विशेषात्पारावतादौ बलपूर्णयुक्ते ॥ २२ ॥ केंद्रस्थिते मित्रशुभेक्षिते
स्याच्छंतंति पात्रं बहुभुक्तिकाले ॥ विचित्रपात्रं प्रवदंति तज्ज्ञा भुक्तीश्वरे केंद्रगते बलाढ्ये
॥ २३ ॥ शुक्रामरेज्यंदुसुता बलाढ्यास्तैरेव युक्तेऽत्र विशेषितांशे ॥ लग्नेश्वरेण सहितौ यदि
भुक्तिनाथौ षष्ठस्थितौ यदि तदा प्रवदंति लोहम् ॥ पात्रं तदीश्वरयुतौ यदि वा विनाशस्थान-
र्क्षगौ सुदृढमत्र सुलोहपात्रम् ॥ २४ ॥ कांस्यं वदंति किल भुक्तिपतौ बलाढ्ये वैशेषिकांशरहिते
यदि सौम्यदृष्टे ॥ भुक्तीश्वरस्थितनवांशपतिर्यदंशे तद्राशिपः शुभयुतोऽपि तथैवमाहुः ॥२५॥
पापग्रहेण सहिते यदि भुक्तिराशौ तद्राशिनाथयुतभागपतौ तदंशे ॥ तद्राशिपे बलविहीनशु-
भैरदृष्टे भुक्तौ कृतौ समदृढं कथयंति तज्ज्ञाः ॥ २६ ॥ धातुद्वययुतं पात्रं भुक्त्यंशनाथराशिगे ॥
पापग्रहेण संदृष्टे कारके बलवर्जिते ॥ २७ ॥ बह्वाशनं भुक्तिपतौ सपापे दावाग्निदंडायुधकाल-
भागे ॥ नीचांशके पापनिरीक्षिते वा शुभैर्न दोषः सहितेक्षणाभ्याम् ॥२८॥ भुक्तिस्थाने शुभ-

युते तदीशे शुभसंयुते ॥ शुभग्रहेण संदृष्टे सुखभुक् स नरो भवेत् ॥ २९ ॥ भुक्तिसौख्ययुतः
श्रीमान् तदीशे बलसंयुते ॥ विशेषितांशके वापि गुरुशुक्रनिरीक्षिते ॥ १३० ॥ भुक्तौ
स्वोच्चे त्रिकोणे वा तदीशेऽपि बलान्विते ॥ कारकेऽपि विशेषांशे शुभदृष्टे सुखाशनी ॥ ३१ ॥
कालोचिताशनी भुक्तिनाथे देहेशवीक्षिते ॥ पापग्रहेण वा दृष्टे नीचांशादियुतेन तु ॥ ३२ ॥
अन्नप्रदो द्वितीयेशे गुरुसौम्ययुतेक्षिते ॥ वैशेषिकांशकयुते मृद्वंशादियुतेऽपि वा ॥ ३३ ॥ गुरु-
शुक्रयुते भुक्तौ नाथे सौम्यनिरीक्षिते ॥ वैशेषिकांशकयुते अन्नदाता नरो भवेत् ॥३४॥ भुक्ति-
राशिपतौ वीर्ये केंद्रे तूपचयेऽपि वा ॥ बलयुक्तैः शुभैर्दृष्टे त्वन्नदाता भवेन्नरः ॥ ३५ ॥ सौम्ये
स्वोच्चगते भुक्तौ मित्रसौम्यनिरीक्षिते ॥ नाथे वैशेषिकांशे वा सुखभुक्तिप्रदो भवेत् ॥ ३६ ॥
अल्पाशी रुचिकामः स्याद्भुक्तिनाथे शुभग्रहे ॥ स्वोच्चे वा शुभसंदृष्टे मृद्वंशादिसमन्विते॥३७॥
परान्नभुक्तदीशे तु क्रूरषष्ट्यंशसंयुते ॥ नीचखेचरसंदृष्टे तद्दूषणपरो नरः ॥ ३८ ॥ भुक्तिस्था-
नाधिपे मंदे तदीशे मंदसंयुते ॥ नीचेऽर्कसूनुना दृष्टे श्राद्धभुक् सततं नरः ॥ ३९ ॥ कुभोजी
भुक्तिनाथे तु शन्यारगुलिकान्विते ॥ नीचशत्रुयमांशादौ शुभदृष्टिविवर्जिते ॥ १४० ॥ तदीशे
शुभसंयुक्ते शीघ्रभुग् बलसंयुते ॥ द्वितीये शुभराशौ वा शुभखेचरसंयुते ॥ ४१ ॥ तदीशे

चरराशौ वा भुक्तौ वा तादृशग्रहे ॥ तादृशे पापसंबंधे चिरभोक्ता तु दूषकः ॥ ४२ ॥ विलग्न-सप्ताष्टमवित्तराशौ दिनेशयुक्ते क्षितिसूनुदृष्टे ॥ भौमेऽथवा वासरनाथदृष्टे स्फोटाग्निभीतिं प्रव-देत्खलाद्वा ॥ ४३ ॥ लग्नांत्यशत्रुमदने सति भूमिपुत्रे मांद्यन्विते कमलबंधुनिरीक्षिते वा ॥ मूढारिनीचभवने यदि वा क्षितीजे त्वाज्यासृगादिसहितः स भवेत्तदानीम् ॥ ४४ ॥ मंदात्मजेन सहिते यदि भूमिपुत्रे वित्तेऽथवा निधनराशिमुपागते वा ॥ तेनैव वीक्षितयुते धनभावनाथे त्वाज्यस्पृशादि नियतं प्रवदंति तज्ज्ञाः ॥ ४५ ॥ पापेक्षिते रविसुते धनराशियुक्ते पापान्विते शुनकभीतिमुपैति मर्त्यः ॥ तद्भावनाथसहिते दिननाथपुत्रे दृष्टेऽथवा शुनकभीतिमुपैति मर्त्यः ॥ ४६ ॥ राहौ द्वितीये गुलिकेन दृष्टे युक्तेऽथवा सर्पभयं वदंति ॥ कदन्नभुग् भूमिसुतेन युक्ते पित्रादिकानां फलमेवमाहुः ॥ ४७ ॥ लग्नेश्वरे शोभनखेचरेंद्रे निध्यादिलाभं धनभावयुक्ते ॥ सौम्ये द्वितीये यदि सत्वहीने पापेक्षिते वाक्चलनं तदाहुः ॥४८॥ वाक्स्थानपेंदू यदि सत्वहीनौ क्रूरांशगौ वाक्पवनार्दितः स्यात् ॥ वाक्स्थानपे धीरतया विहीने पापेक्षिते वाक्चलनं तदाहुः ॥ ४९ ॥ पापे धने पापनिरीक्षिते वा क्रूरांशगे पापयुते विशेषात् ॥ तत्स्थानपे पापनिरीक्षिते-ऽपि विषप्रयोगः खलु वंचनादेः ॥ ५० ॥ मित्रादिस्थानपवशादेवं तेषां फलं वदेत् ॥ नाथकार-

कभावानां बलाबलवशात्तथा ॥ ६१ ॥ सर्वेषामुपकारार्थं रहस्यार्थप्रकाशकः ॥ धनभावफला- ध्यायो वर्णितोऽव्ययसूनुना ॥ १६२ ॥ इति सर्वार्थचिंतामणौ तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

सहजेन सहजविक्रमौषधसहायान् गलोरसस्थानम् ॥ विद्यादक्षिणकर्णं भक्ष्यविशेषांश्च मूला- दीन् ॥ १ ॥ नाशस्थितौ सोदरनाथभौमौ पापेक्षितौ सोदरनाशमाहुः ॥ पापर्क्षगौ पापसमा- गमौ वा भ्रातॄन् समुत्पाद्य विनाशहेतुः ॥ २ ॥ नीचर्क्षगौ सोदरकारकाख्यौ नीचांशगौ पापस- मागमौ वा ॥ क्रूरादिषष्ट्यंशयुतौ तदानीं भ्रातॄन् समुत्पाद्य विनाशमाहुः ॥ ३ ॥ पापग्रहे सोदरभावयुक्ते सोत्थेथवा पापनिरीक्षिते स्यात् ॥ तदीश्वरे पापखगांतरस्थे सहोदराणां कथयंति नाशम् ॥ ४ ॥ पापांतरे पापनिरीक्षिते वा पापान्विते नीचगृहान्विते वा ॥ तृतीयभावे शुभखे- चरेंद्रैर्न वीक्षिते सोदरनाशमाहुः ॥ ५ ॥ भ्रातृस्थानाधिपस्थांशराशीशे नाशराशिगे ॥ नीचारा- तिगते मूढे त्वाहुः सोदरनाशनम् ॥ ६ ॥ शनिमांदिसमायुक्ते पापखेचरवीक्षिते ॥ तदीशे नीचराशिस्थे सोदराणां विनाशनम् ॥ ७ ॥ पापांतरे तदीशे तु कारके वा तथाविधे ॥ तथैव तद्भावनाथे सोदराणां विनाशनम् ॥ ८ ॥ पापाहिवीक्षिते भावे भावेशे भावसंस्थिते ॥ क्रूरष- ष्ट्यंशके वापि सोदराणां विनाशनम् ॥ ९ ॥ भ्रातृस्थानाधिपस्थांशराशीशे यन्नवांशके ॥ तदीशे

नाशराशौ चेत्सोदराणां विनाशनम् ॥ १० ॥ सोत्थेशयुक्तराशीयंशनाथे यत्र नवांशके ॥ तन्नाथे
नीचमूढारिभावे सोदरनाशनम् ॥ ११ ॥ भ्रातृस्थानाधिपे दुःस्थे कारके वा तथाविधे ॥ पापे-
क्षिते पापयुक्ते स्वोच्चे वा सोदरक्षयः ॥ १२ ॥ अतिरक्रूसमायुक्ते भावे वा कारकेऽपि वा ॥
तद्भावनायके वापि बाल्ये सोदरनाशनम् ॥ १३ ॥ यत्किंचित्क्रूर संयोगे तन्नाशश्चिरकालतः ॥
बलहीनवशादेवं सोदरक्षयचिंतनम् ॥ १४ ॥ भ्रातृस्थाने शुभैर्युक्ते शोभनग्रहवीक्षिते ॥ भाव-
नाथे बलाढ्ये तु भ्रातृलाभमुदीरयेत् ॥ १५ ॥ भ्रातृके कारके वापि शुभयोगनिरीक्षिते ॥ भावे
वा बलसंपूर्णे भ्रातृणां वर्धनं भवेत् ॥ १६ ॥ केंद्रत्रिकोणगे वापि स्वोच्चमित्रस्ववर्गगे ॥ नाथे वा
कारके वापि भ्रातृलाभमुदीरयेत् ॥ १७ ॥ सौम्यग्रहान्विते वापि सौम्यानामंशके यदि ॥ नाथे
वा कारके वापि भावे सोदरवर्धनम् ॥१८॥ सोत्थेश्वरे गोपुरभागयुक्ते सिंहासने कारकखेचरेंद्रे ॥
सौम्यग्रहे तद्भवनाधिपे स्याद्भ्रात्रादिलाभं कथयंति तज्ज्ञाः ॥ १९ ॥ पारावतांशे यदि केंद्र-
राशौ भावेश्वरे शोभनखेटयुक्ते ॥ सौम्यांशके सौम्यगृहे तदीशे सोत्थादिबाहुल्यमुदीरयंति
॥ २० ॥ भ्रातृभावे स्वतुंगे वा स्वर्क्षे मूलत्रिकोणगे ॥ बलाढ्ये भावनाथे स्यात्सोदरोत्पत्तिमा-
दिशेत् ॥ २१ ॥ मृदंशादिसमायुक्ते भावनाथे शुभैर्युते ॥ शुभेक्षिते वा भावेशे सोदरोत्पत्ति-

मादिशेत् ॥ २२ ॥ वैशेषिकांशे भावेशे ह्यथवा शुभवीक्षिते ॥ मृदंशादियुते वापि भ्रातृवर्धन-
मेव तु ॥ २३ ॥ लग्ननाथस्तु सोत्थेशमित्रश्चेन्मित्रता भवेत् ॥ भ्राता शत्रुर्भवेच्छत्राववं सर्वत्र
युज्यते ॥ २४ ॥ अयुग्मभांशे यदि कारकेशौ गुर्वर्कभूसूनुनिरीक्षितौ चेत् ॥ ओजे गृहे स्या-
द्यदि विक्रमाख्ये पुंभ्रातरस्तस्य वदंति तज्ज्ञाः ॥ २५ ॥ युग्मांशके युग्मगृहे तदीशे भावे तथा
कारकखेचरेंद्रे ॥ सहोदरीलाभमिहाहुरार्या नपुंसकांशे किल तत्तथैव ॥ २६ ॥ भ्रातृराश्यंश-
कवशाद्भ्रातृसंख्यां विनिर्दिशेत् ॥ नाथकारकसंयुक्तराश्यंशाद्वा तथा भवेत् ॥ २७ ॥ भ्रातृरा-
शिसमायुक्तखेचरस्यांशकाद्वदेत् ॥ सोत्थेशयुक्ते राश्यंशात् कारकान्वितभागतः ॥ २८ ॥ तयोः
संयुक्तखेटस्य राश्यंशाद्वा तथा भवेत् ॥ एतयो रश्मिमानाद्वा पापयोगाद्विनाशनम् ॥ २९ ॥
संवादे विविधे प्राप्ते तत्कर्मबलतो भवेत् ॥ कारकाद्विक्रमेशाद्वा विक्रांतस्य विनिर्दिशेत् ॥ ३० ॥
शौर्याधिपे तुंगयुते बलाढ्ये केंद्रत्रिकोणे यदि सौम्यदृष्टे ॥ मूलत्रिकोणे स्वगृहेऽग्रगेहे वैशेषि-
कांशे पुरुषः स धीरः ॥ ३१ ॥ धीरो भवेद्विक्रमराशिनाथे सौम्ये गृहांशे शुभखेटयुक्ते ॥ तथैव
तत्कारकखेचरेंद्रे सौम्यग्रहाणां भवने तु शौर्यः ॥ ३२ ॥ धैर्यान्वितो विक्रमराशिनाथसंयुक्तरा-

१ कें वा इति पाठः ।

इयंशपतौ यदंशे ॥ तदंशनाथे स्वगृहादिवर्गे युद्धे विदग्धः कलहप्रवीणः ॥ ३३ ॥ विक्रमाधिपतौ स्वोच्चे नाशस्थे पापसंयुते ॥ चरभे चरराश्यंशे युद्धात्पूर्वं दृढो भवेत् ॥ ३४ ॥ पापग्रहाणां भवने विक्रमे पापसंयुते ॥ तथाविधे तदीशेऽपि युद्धात्पूर्वं दृढो भवेत् ॥ ३५ ॥ क्रूरषष्ट्यंशगे वापि तदीशे नीचराशिगे ॥ पापयुक्तेऽथवा दृष्टे युद्धजाड्यो भवेन्नरः ॥ ३६ ॥ युद्धे पराजितः स्वोच्चे विक्रमेशे विनाशभे ॥ कारके बलहीने वा क्रूरषष्ट्यंशसंयुते ॥ ३७ ॥ सिंहासनांशे यदि विक्रमेशे पारावते गोपुरभागयुक्ते ॥ मृदंशके वा शुभदृष्टियोगे मनोत्सवो युद्धविशारदः स्यात् ॥ ३८ ॥ युद्धाभिलाषी समरप्रवीणो वीर्येश्वरे सोमसुते स्वतुंगे ॥ वैशेषिकांशे बलपूर्णयुक्ते मृदंशगे वा विपरीतमन्यत् ॥ ३९ ॥ शौर्याधिपे भानुयुतेऽत्र धीरश्चंद्रान्विते मानसधैर्यजातः ॥ कृष्णो जडो भौमयुते प्रकोपी सौम्यान्विते[1] सात्त्विकबुद्धियुक्तः ॥ ४० ॥ जीवान्विते धीरतया समेतः सर्वार्थशास्त्रार्थविशारदः स्यात् ॥ कामातुरस्त्वास्फुजिदन्विते स्यात्तन्मूलकोपात्कलहप्रवीणः ॥ ४१ ॥ जडो भवेद्दासरनाथपुत्रयुक्ते फणीनामधिपेन युक्ते ॥ बहिर्दृढो हृद्गतजाड्ययुक्तः केत्वन्विते मांदियुते तथैव ॥ ४२ ॥ लग्ने गुरौ विक्रमनाथयुक्ते चतुष्पदानां प्रवदंति भीतिम् ॥

---

१ सौम्ययुते इति पाठः ।

गवां भयं वा जलराशिलग्ने जलप्रमादे भवति ध्रुवं स्यात् ॥ ४३ ॥ वीर्याधिपे राहुसमेतराशि-
नाथान्विते राहुयुते विलग्ने ॥ सर्पाद्भयं विक्रमराशिनाथे बुधेन युक्ते गलरोगमत्र ॥ ४४ ॥ नीचे
तृतीयेऽरिगृहे विमूढे पापेक्षिते तद्गरलप्रमादः॥ विषप्रयोगाद्विषलक्षणाद्वा तेषामभावेऽत्र विनिश्चि-
तार्थः ॥ ४५ ॥ शुक्रे बलाढ्ये यदि वा शशांके सौम्येक्षिते शोभनखेटयुक्ते ॥ सोत्थस्थिते स्वोच्च-
सुमित्रवर्गे सुपात्रभोक्ता सुखभुक्तिभाक् स्यात् ॥ ४६ ॥ पापे तृतीये गलरोगमत्र वदंति मांद्या-
दियुते विशेषात् ॥ भौमान्विते प्रेतपुरीशभागे तृतीयराशौ यदि कर्णरोगम् ॥ ४७ ॥ सोत्थे
शनौ मांदियुते तथैव वाताद्भयं सौम्यदृशा विहीने ॥ तृतीयनाथस्थितराशिनाथसंयुक्तराश्यं-
शपतौ च केंद्रे ॥ ४८ ॥ पापान्विते पापनिरीक्षिते वा वदंति कर्णोद्भवरोगमत्र ॥ क्रूरादिषष्ट्यं-
शयुते तदीशे कर्णस्य रोगं कथयंति तज्ज्ञाः ॥ ४९ ॥ सौम्ययुक्ते तृतीये वा सौम्यखेचरवी-
क्षिते ॥ तदीशे शुभसंयुक्ते कर्णयोर्भूषणं वदेत् ॥ ५० ॥ शुक्रे तृतीये यदि मौक्तिकं तु जैवेऽतुलं
त्वाभरणं वदंति ॥ भानोस्तु संबंधयुते तृतीये सद्रत्नमानीलमयं हि मांद्ये ॥५१॥ चंद्रे बहुत्वाभ-
रणं तु सौम्ये श्यामं भवेत्तत्क्षितिसूनुराशौ ॥ विचित्रमार्गाभरणं तथैव पापेक्षिते तद्व्ययमाहुरार्याः
॥ ५२ ॥ शुभग्रहाणां भवने तु तस्मिंस्तृतीयराशौ श्रवणं कथानाम् ॥ पुण्यादिकानां यदि ॥२३॥

पापराशौ क्रूरश्च तत्कर्णकुठारमाहुः ॥ ५३ ॥ इति तृतीयभावः ॥ अथ चतुर्थभावः ॥ बंधुभवने बंधून् गृहमातृजलात्मवृद्धिभोज्यादीन् ॥ वाहनहृदयस्कंधासनशयनसुखानघोजलं ब्रूयात् ॥ १ ॥ लग्नेश्वरे लग्नगते सुखेऽगनाथेन युक्ते यदि गेहलाभः ॥ अयत्नतः स्याच्छुभदृष्टियोगात्स्वोच्चे स्वमित्रे स्वगृहे बलाढ्ये ॥ २ ॥ गेहाधिपे केंद्रगते बलाढ्ये सौम्येक्षिते मंदिरलाभमाहुः॥ वैशेषिकांशे परमोच्चभागे गेहेश्वरे मंदिरलाभमाहुः ॥ ३ ॥ गृहस्थानाधिपस्थांशनाथसंयुक्तराशिपः॥ तदंशाधिपतौ केंद्रे गृहलाभमुदीरयेत् ॥४॥ भाग्येशे केंद्रभावस्थे गृहेशे स्वोच्चमित्रगे॥ गृहराशिगते खेटे स्वोच्चे बहुविचित्रके ॥५॥ तृतीये सौम्यसंयुक्ते गृहेशे स्वबलान्विते ॥ तदीशे बलसंपूर्णे हर्म्यै प्राकारमंडिते ॥ ६ ॥ सिंहासनांशके वापि गृहेशे गोपुरांशके ॥ मृद्वंशादियुते वापि तद्गृहं सौधमंडितम् ॥ ७ ॥ पारावतांशके गेहनाथे गुर्विंदुवीक्षिते ॥ गोपुराद्यंशके वापि दैविके हर्म्यमादिशेत् ॥ ८ ॥ विचित्रसौधप्राकारमंडितं गृहमादिशेत् ॥ कर्माधिपेन सहिते नाथे केंद्रेर्कसूनुना ॥ ९ ॥ गेहाधिपे नाशगते यदि स्यात्पापेक्षिते तद्गृहनाशमत्र ॥ गेहेशसंयुक्तनवांशनाथे नाशस्थिते स्यादपि गेहनाशः ॥ १० ॥ बंधुस्थानेश्वरे सौम्ये सौम्यग्रहनिरीक्षते ॥ तत्कारकबलाढ्ये वा बंधुपूज्यो भवेन्नरः ॥ ११ ॥ बंधुस्थानगते जीवे तदीशे शुभसंयुते ॥

स. चिं. गुरुदृष्टिसमायुक्ते बंधुश्रेष्ठो भवेन्नरः ॥ १२ ॥ बंधूपकर्ता तन्नाथे केंद्रे कोणेऽथ संयुते ॥ वैशेषि- अ०
कांशसंयुक्ते पापदृग्योगवर्जिते ॥ १३ ॥ बंधूनामुपकारी स्याद्बंधौ गुर्वच्छसोमजाः ॥ तेषां गृहे ४
॥२४॥ वा तैर्दृष्टे मृद्वंशादिसमन्विते ॥ १४ ॥ बंधुभिस्त्यक्तपुरुषस्तदीशे पापसंयुते ॥ क्रूरषष्ट्यंशके
वापि नीचारातिगृहेऽपि वा ॥ १५ ॥ बहुपापसमायुक्ते बंधौ नाथे तथैव हि ॥ तत्कारके तथैवात्र
बंधूनां कुत्सितो वदेत् ॥ १६ ॥ नाथकारकसंयुक्तनवांशेशांशनायकः ॥ नीचराशिगतो मूढो
बंधूनां भयकर्मकृत् ॥ १७ ॥ बंधूपभोगी केंद्रस्थे तदीशे शुभवीक्षिते ॥ गोपुराद्यंशके वापि
मृद्वंशादिसमन्विते ॥ १८ ॥ धने लाभे त्रिकोणस्थे तन्नाथे शुभवीक्षिते ॥ सौम्यग्रहाणामंशे वा
बंधूनामुपकारकृत् ॥१९॥ बंधुद्वेषी भवेन्नित्यं पापाक्रांते गृहे यदा ॥ नीचास्तखेटसंयुक्ते शुभ-
दृग्योगवर्जिते ॥ २० ॥ कस्मिंश्चित्खेचरेंद्रे वा बंधौ स्वोच्चे स्वमित्रभे ॥ गुरुणा दृष्टिसंपाते बंधु-
पूज्यो भवेन्नरः ॥२१ ॥ गृहस्थाने चरे लग्ने तदीशे चरराशिगे ॥ तथैव तत्कारकेऽपि बहुस्थाने
गृहं भवेत् ॥ २२ ॥ स्थिरे गृहे स्थिरगृहं नाथकारकयोरपि ॥ षष्ट्यंशे शुभभागे वा तदीशे ॥२४॥
स्थैर्यतां व्रजेत् ॥२३॥ अर्थव्ययगृहेशैस्तैर्यावंतः पापसंयुताः ॥ तावद्गेहादिनाशः स्याच्छुभदृष्टा
न दोषदाः ॥ २४ ॥ अर्थव्ययगृहेशास्तु केंद्रकोणादिसंयुताः ॥ तावद्गेहालयं सर्वं शोभनं तत्र

निर्दिशेत् ॥ २५ ॥ गृहेशे कर्मराशिस्थे कर्मेशे गेहमागते ॥ बलयुक्ते धरासूनौ बहुक्षेत्रं विनिर्दिशेत् ॥ २६ ॥ बलाढ्ये कर्मराशीशे बंधुस्थानाधिपे तथा ॥ तयोर्मैत्री यदा तस्य बहुक्षेत्रं विनिर्दिशेत् ॥ २७ ॥ क्षेत्रस्थाने शुभैर्युक्ते तदीशे शुभसंयुते ॥ तत्कारके तथा प्राप्ते बहुक्षेत्रधनैर्युतः ॥ २८ ॥ क्षेत्राधिपे पंचमस्थे गोपुरांशादिसंयुते ॥ मृद्वंशादिगते वापि बहुक्षेत्रसमन्वितः ॥ २९ ॥ भ्रातृकारकसंयुक्ते भ्रातृनाथेन संयुते ॥ क्षेत्रे तदीश्वरे वापि भ्रातृक्षेत्रं विनिर्दिशेत् ॥ ३० ॥ क्षेत्रेशसंयुक्तनवांशनाथे केंद्रस्थिते मित्रनिरीक्षिते वा ॥ भौमान्विते भौमदृशा समेते भ्रातुर्धनं क्षेत्रमुदाहरंति ॥ ३१ ॥ लग्नेश्वरे क्षेत्रगते बलाढ्ये लग्ने बलिष्ठे यदि क्षेत्रनाथे ॥ शुभग्रहैर्दृष्टसमागमे वा क्षेत्रं स्वकीयेन बलेन याति ॥ ३२ ॥ कलत्रकारके क्षेत्रे तदीशे वा कलत्रगे ॥ तदीशयोस्तथा मैत्र्यां कलत्रात्क्षेत्रमादिशेत् ॥ ३३ ॥ षष्ठेश्वरे क्षेत्रगते बलाढ्ये षष्ठस्थिते वा गृहभावनाथे ॥ षष्ठेश्वरात्क्षेत्रपतौ बलाढ्ये शत्रोः सकाशात्स धरामुपैति ॥ ३४ ॥ पारावतांशे स्वगृहे बलाढ्ये क्षेत्रेश्वरे चोपचयं गते वा ॥ आरोहभागे शुभदृष्टियुक्ते क्षेत्रं बहुत्वं समुदाहरंति ॥ ३५ ॥ धनेशलाभेशसमन्विते वा क्षेत्रे तदीशेऽप्यथ कारके वा ॥ वैशेषिकांशे शुभदृष्टियुक्ते बह्वर्थरूपं गृहमाहुरार्याः ॥ ३६ ॥ क्षेत्रेश्वरे नीचगते विमूढे

पापांतरे पापनिरीक्षिते वा ॥ पापग्रहक्षेत्रगतेऽरिगेहे क्षेत्रादिनाशं कथयंति तज्ज्ञाः ॥ ३७ ॥
पापांतरस्थे यदि भूमिपुत्रे पापांतरे पापनिरीक्षिते वा ॥ पापग्रहक्षेत्रगतेऽथवा स्यात्क्रू-
रांशके भूमिविनाशमाहुः ॥ ३८ ॥ क्रूरादिषष्ट्यंशगते तदीशे क्षेत्रे सपापे यदि नीचभे वा ॥
दुःस्थेऽरिगेहे त्वतिभीषणांशे क्षेत्रादिनाशं कथयंति तज्ज्ञाः ॥ ३९ ॥ क्षेत्रेश्वरे पापयुते धनस्थे
नीचारिभे क्षेत्रविनाशमेति ॥ स्वोच्चस्थिते तद्भवनेश्वरे तु पापान्विते विक्रयमेति भूमेः ॥ ४० ॥
आज्ञाक्षयात् क्षेत्रविनाशमाहू राज्येश्वरे क्षेत्रगते सपापे ॥ क्रूरांशके मृत्युयमादिभागे कर्मेश्वरे-
णापि युते तथैव ॥ ४१ ॥ आज्ञाक्षयाद्भूमिविनाशमेति राजेशतत्कारकभूमिनाथे ॥ क्रूरांशके वा
त्ववरोहभागे नाशस्थिते मृत्युयमादिभागे ॥ ४२ ॥ राजाज्ञयाक्षेत्रविनाशमेति भानौ तदीशेन
युतेपि निम्ने ॥ धनेशसंयुक्तनवांशनाथयुक्तांशपेनापि युते सपापे ॥ ४३ ॥ जीवेन दृष्टे यदि वा
तदीशे रम्ये गुरौ शोभनखेचरे वा ॥ सौम्यांतरे तद्भवने ससौम्ये सुखी भवेत्सर्वजनेषु मुख्यः
॥ ४४ ॥ जीवे बलाढ्ये सुखराशिनाथयुक्ते ससौम्ये तु चतुष्टये वा ॥ जीवेन दृष्टे यदि वा तदीशे
मृद्वंशके वा सुखभाग् नरः स्यात् ॥ ४५ ॥ सुखे गुरौ शोभनखेचरे वा सौम्यांतरे तद्भवने
ससौम्ये ॥ जीवे बलाढ्ये यदि लग्ननाथात्सुखी भवेत्सर्वजनेषु मुख्यः ॥ ४६ ॥ गोपुराद्यंशके

॥२५॥

वापि सुखपे देवपूजिते ॥ धनायवृद्धिभावेषु तस्मिन्खेटे सुखी भवेत् ॥ ४७ ॥ सौम्येतरान्विते सौख्ये बलहीने गुरावपि ॥ सपापे दुर्बले नाथे दुःखी स्यादर्थसंयुतः ॥ ४८ ॥ पुत्रार्थबंधुयुक्त-श्चेद्दुःखी स्यान्नीचखेचरे ॥ सुखी तदीशे पापेन युक्ते क्रूरांशसंयुते ॥ ४९ ॥ रव्यारयुक्ते सुखरा-शिनाथे क्रूरांशके सौम्यदृशा विहीने ॥ आरोहभागेतरभागयुक्ते जातो नरो दुःखित एव नित्यम् ॥ ५० ॥ नीचारिभागे रविभूमिपुत्रे सुखस्थिते पापदृशा समेते ॥ क्रूरांशके तद्भवना-धिनाथे गृहार्थहीनो भवति प्रमादात् ॥ ५१ ॥ पापान्विते पापनिरीक्षिते वा पापांतरे वा सुखभे तदीशे ॥ क्रूरादिषष्ट्यंशसमन्विते वा पापी नरः स्याच्छुभदृष्टियुक्ते ॥ ५२ ॥ पापे बहुत्वे सुख-राशियुक्ते तदीश्वरे चारिविमूढयाते ॥ पापान्विते वा यमसूनुयुक्ते जातो बहुत्वं समुपैति पापम् ॥ ५३ ॥ शुक्रेंदुविद्देवपुरोहितानां क्षेत्रे सुखे पूर्णबलान्वितानाम् ॥ शुभान्विते शोभनदृष्टि-याते जातो नरोऽयं भुवि भुक्तिभाक् स्यात् ॥ ५४ ॥ बुधदृष्टे सिते सौख्ये सौम्यमध्यगतेऽपि वा ॥ गोपुराद्यंशगे वापि पुण्यभाक् स नरो भवेत् ॥ ५५ ॥ नीचान्विते मूढयुते सुखस्थे सप-त्नभे वा जलराशिसंज्ञे ॥ तदीश्वरे हीनबले तदानीं पतत्यसौ कूपतटांबुराशौ ॥ ५६ ॥ लग्ने-श्वरे हीनबले सुखस्थे नीचेऽर्कयुक्ते यदि वा सपापे ॥ जलग्रहेणापि युते सुखेशे बलेन हीने जल-

राशिमग्नः ॥ ५७ ॥ सरित्स्थानाधिपे लग्ननाथेन सहिते सुखे ॥ कर्माधिपेन संदृष्टे नदीकूपत-
टादिषु ॥ ५८ ॥ पतनं कूपनद्यादौ सुखेशस्थानराशिपः ॥ सरित्स्थानेशसंदृष्टो यदि वा सुख-
पेन युक् ॥ ५९ ॥ शिलाप्रहारस्तस्य स्याद्रविभौमान्विते सुखे ॥ दृष्टे युते कर्मपेन सरित्स्था-
नाधिपेन वा ॥ ६० ॥ सुखेशे राहुमंदाभ्यां सहिते कुजवीक्षिते ॥ शुभदृष्टिविहीने तु शिलाभिः
पीडितो नरः ॥ ६१ ॥ केंद्रस्थिते रात्रिकरे भृगौ वा पापान्विते पापनिरीक्षिते वा ॥ क्रूरांशके
वा त्ववरोहभागे सोऽयं जनन्या सह संगमेति ॥ ६२ ॥ पापेक्षिते पापयुते शशांके दिवाकरे वा
यदि केंद्रराशौ ॥ क्रूरे सुखे वा यदि पापदृष्टे जातो नरः स्यादिह मातृगामी ॥ ६३ ॥ पापेक्षिते
वा सुखभावनाथे पापान्विते सौम्यदृशा विहीने ॥ दारेश्वराल्लग्नपतौ विहीने जातो नरो मातृस-
मानगामी ॥ ६४ ॥ सहोदरीसंगममाहुरन्ये दारेश्वरे क्रूरयुते सुखस्थे ॥ पापेक्षिते पापसमान-
मेव क्रूरादिषष्ट्यंशसमन्विते वा ॥ ६५ ॥ सुखे शनौ पापनिरीक्षिते वा पापान्विते तादृशपाप-
युक्तः ॥ पापग्रहाणां भवने सुखे तु क्रूरादिषष्ट्यंशयुते तथैव ॥ ६६ ॥ षष्ठेशभूनंदनसंयुतेऽब्जे
सुखस्थिते पापनिरीक्षिते वा ॥ चंद्रांशसंयुक्तनवांशनाथे तथाविधे मातरि दोषमाहुः ॥ ६७ ॥
सुखेश्वरे राहुयुते सपापे शनैश्चरेणापि दिवाकरेण ॥ मातान्यसक्ता सुखराशिनाथसंयुक्तभागा-

धिपतौ तथैव ॥ ६८ ॥ सुखेश्वरे लग्नगते बलाढ्ये गुर्विंदुसौम्यास्फुजिदर्कदृष्टे ॥ वैशेषिकांशे शुभदृष्टियुक्ते पतिव्रता तस्य भवेत्सवित्री ॥ ६९ ॥ तथाविधे शीतकरे सराहुकेतौ सवित्री यदि नीचसक्ता ॥ मंदेन युक्ते सति शूद्रसक्ता वैश्येन सक्ता शशिसूनुयुक्ते ॥ ७० ॥ रव्यन्विते क्षत्रियजातिसक्ता शुक्रेज्ययुक्ते द्विजपुंगवैश्च ॥ धरासुतेनापि तथाविधेन वक्तुं फलं तादृशमेव सत्यम् ॥ ७१ ॥ षष्ठेश्वरेण सहिते सुखराशिनाथे भाग्यस्थिते जनकमत्र विटं करोति ॥ भाग्याधिपेन सहिते यदि मातृनाथे सौख्यस्थिते जनकमत्र विटं करोति ॥ ७२ ॥ लग्नेशभाग्येशसुखेशयुक्ते षष्ठाधिपे स्यात्परजात एव ॥ तदंशनाथेन युते तदीशे पापेक्षितः स्यात्परजात एव ॥ ७३ ॥ पापांतरे मातृगृहे तदीशे तत्कारके वा शुभदृष्टियुक्ते ॥ लग्नेश्वराद्धीनबले शुभेशे जातस्तदानीं परजात एव ॥ ७४ ॥ न वीक्ष्यते तद्गुरुणा विलग्नं निशाकरो वा गुरुणा न दृष्टः ॥ दिवाकरेणापि युते शशांके सपापचंद्रे रविणा तथैव ॥ ७५ ॥ पापे शुभे मातृगृहे सपापे लग्नेश्वरे हीनबले सपापे ॥ परांशकादौ सुखभे तदानीं जातो नरः स्यात्परजात एव ॥७६॥ मातृस्थाने शुभयुते कारके शुभसंयुते ॥ सद्भावपे बलाढ्ये वा मातुरायुष्यमादिशेत् ॥ ७७॥ चंद्रे बलिष्ठे यदि वा भृगौ वा सौम्येक्षिते शोभनभागयुक्ते॥ चतुष्टये मातृगृहाच्छुभाढ्ये मातुश्च दीर्घायुरुदाहरंति

॥ ७८ ॥ भावेशसंयुक्तनवांशनाथयुक्तांशपे केंद्रयुते बलाढ्ये ॥ तस्मिन् शशांकाद्यदि केंद्रयुक्ते मातुश्च दीर्घायुरुदाहरंति ॥ ७९ ॥ पापांतरे पापयुते शशांके पापेक्षिते मातृगृहे विनाशः ॥ शुक्रात्तथैवं प्रवदंति संतस्तत्स्थानपाद्वा कथयंति शेषम् ॥ ८० ॥ निशाकरात्पापयुते स्मरे वा भृगोस्तथैवं जननीविनाशम् ॥ सुखे शनौ मातृविनाशमेति पापेक्षिते चेदचिरेण नाशः ॥ ८१॥ शुभे क्षितश्चेच्चिरकालमृत्युमुदाहरंत्यत्र महानुभावाः ॥ पापग्रहाणां भवने शनौ तु पापान्विते मातृविनाशमेति ॥ ८२ ॥ मातृस्थानाधिपस्थांशराशीशोऽयं नवांशके ॥ तदंशनाथकिरणा-न्मातृकालं विनिर्दिशेत् ॥ ८३ ॥ नाथकारकराशीनां मध्ये यो बलवान् भवेत् ॥ यावानंशस्त-दंशे स्यान्मेषादौ तत्र मृत्युदः ॥ ८४ ॥ वक्रे तु द्विगुणं प्रोक्तं त्रिगुणं त्वतिवक्रगे ॥ चतुर्गुणं शुभैर्दृष्टे कालमेवं विनिर्दिशेत् ॥ ८५ ॥ हृदये पापसंयुक्ते पापदृष्टे तदीश्वरे ॥ पापांतरे वा हृदये हृत्कापत्यं विनिर्दिशेत् ॥ ८६ ॥ शन्याररराहुसंयुक्ते हृदये शुभवर्जिते ॥ तथैव तद्भावनाथे हृत्कापत्यं विनिर्दिशेत् ॥ ८७ ॥ पापे कर्मेश्वरे सौख्ये कपटी पापवीक्षिते ॥ सपापे रंध्रपे सौख्ये

१ अथोच्चरश्मिसाधनं ग्रंथान्तरे । नीचोनं तु ग्रहं भार्द्धाधिक्ये चक्राद्विशोधयेत् । उच्चरश्मिर्भवेद्राशिः सैको द्विघ्नांशसंयुतः ॥

कापत्यं पापसंयुते ॥ ८८ ॥ भानुना क्षीणचंद्रेण सहिते हृदये यदा ॥ कपटीक्षणमात्रं तु निष्का-
पत्यं तदूर्ध्वतः ॥ ८९ ॥ हृदये शुभसंयुक्ते स्वोच्चमित्रगृहान्विते ॥ शुभग्रहाणां क्षेत्रे वा
निष्कापत्यं विनिर्दिशेत् ॥ ९० ॥ विशुद्धहृदयः शांतो हृदयेशे बलान्विते ॥ गोपुराद्यंशके
वापि मृदंशादियुते तथा ॥ ९१ ॥ लग्नेश्वरे हृद्गते वा शुभयुक्तेक्षितेपि वा ॥ पारावतादिभा-
गस्थे निष्कापत्यं विनिर्दिशेत ॥ ९२ ॥ लग्ने गुरौ दानवपूजितेन युक्ते यदा तस्य विशुद्धचि-
त्तम् ॥ पापे सुखे तद्भवनाधिनाथे पापान्विते तस्य विरुद्धचित्तम् ॥ ९३ ॥ राहौ सुखे पापदृशा स-
मेते बहिर्विशुद्धस्त्वति तत्र भाति ॥ अंतर्गतं तत्कपटं वदंति पापे बहुत्वे सुखराशियुक्ते ॥ ९४ ॥
यदा लग्नसुखेशौ वा मित्रभूतौ परस्परम् ॥ शुभेक्षितौ शुभैर्युक्तौ मातृस्नेहं विनिर्दिशेत् ॥ ९५ ॥
लग्नेश्वरेण संदृष्टे मातृनाथे चतुष्टये ॥ शुभग्रहान्विते दृष्टे मातृस्नेहं विनिर्दिशेत् ॥ ९६ ॥
शत्रुश्चेल्लग्ननाथस्य मातृभावाधिपौ यदि ॥ पापेक्षिते पापयुते तच्छत्रुत्वं विनिर्दिशेत् ॥ ९७ ॥
लग्नेशान्नाशराशिस्थे मातृस्थानाधिपे यदि ॥ तथैव लग्नभावाद्वा तच्छत्रुत्वं विनिर्दिशेत् ॥ ९८ ॥
वाहनेशे बलयुते वाहने शुभसंयुते ॥ शुभग्रहेण संदृष्टे वाहनादिफलं भवेत् ॥ ९९ ॥ सुवर्ण-
वस्त्राभरणादियानं शुक्राद्वदेत्तत्सुखराशितो वा ॥ सेंदौ चतुर्थाधिपतौ विलग्ने लग्नेश्वरेणापि

युतेऽश्वलाभः ॥ १०० ॥ शुक्रेण युक्ते यदि वाहनेशे देहान्विते वा नरवाहनादि ॥ देवेंद्रपूज्येन युतेऽत्र लग्ने वदंति संतश्च तुरंगयानम् ॥ १ ॥ चंद्रामरेज्यामरशत्रुपूज्यैर्युक्ते तनौ वा यदि वाहनेशे ॥ प्रोक्तं त्रयं वाहनमाहुरार्या नीचारिमूढादिविहीनखेटैः ॥ २ ॥ भाग्येशलग्नेशचतुर्थनाथाः कर्मस्थिता नीचविमूढहीनाः ॥ कर्मेश्वरेणापि युते विलग्ने सिंहासनप्राप्तिमुदाहरंति ॥ ३ ॥ भाग्यस्थिते वाहनराशिनाथे सशुक्रजीवे सुखराशियुक्ते ॥ भाग्याधिपे कोणचतुष्टये वा बह्वर्थदेशाभरणार्थयानम् ॥ ४ ॥ भाग्याधिपेन सहिते यदि वाहनेशे जीवेक्षिते तनुगते बलपूर्णयुक्ते ॥ स्वक्षेत्रतुंगसहिते यदि वा त्रिकोणे भूनाथमानववशाद्धनवाहनादि ॥ ५ ॥ भाग्येश्वरेणापि युते सुखेशे यत्र स्थिते पश्यति वा सुखर्क्षम् ॥ वैशेषिकांशे यदि वा बलाढ्ये सर्वार्थभाग्यान्वितवाहनः स्यात् ॥६॥ दुःस्थे विमूढे यदि वाहनेशे भाग्येश्वरेणापि समीक्षिते वा ॥ दुर्वाहिनी चंचलवाहिनी वा लाभाधिपेनापि समीक्षिते वा ॥ ७ ॥ सौख्याधिपे शोभनखेचरेण भाग्येश्वरेणापि युतेऽथवा स्यात् ॥ सेनाबहुत्वं समुपैतिजातो बहुत्वदेशाभरणानि यानम् ॥८॥ भाग्येश्वराल्लाभगते विलग्ननाथे सुखेशे यदि भाग्यराशौ ॥ सुखायभाग्ये तनुनायके वा त्वसंख्ययानादियुतः प्रसिद्धः ॥ ९ ॥ सुखेश्वरे केंद्रगते तदीशे लग्नस्थिते वा बहुवाहनाढ्यः ॥ कर्मेश्वरे लग्नगते

तदीशे कर्मस्थिते वा बहुवाहनाढ्यः ॥ ११० ॥ सुखेश्वरे सौम्ययुते सुखस्थे शस्त्राश्वकोशाधिप-
तिर्भवेत्तु ॥ क्षेत्रेश्वरे लाभगते बलाढ्ये बंधौ भवे वा क्षितिसूनुयुक्ते ॥ ११ ॥ भूसूनुराशौ यदि
वा सुखेशे राज्यार्थिसौख्याभरणादियानम् ॥ सौम्ये विलग्ने सबलं प्रयुक्ते धर्मान्विते शोभनखे-
चरेंद्रे ॥ १२ ॥ स्वोच्चस्थिते वित्तपतौ च केंद्रे सिंहासनप्राप्तिमुदाहरंति ॥ सौम्येक्षिते धर्मगृहे तु
केंद्रे सवित्तपाः शोभनखेचरेंद्राः ॥ १३ ॥ उच्चे ग्रहे वा धनराशियुक्ते सिंहासनप्राप्तिमुदाहरंति ॥
केंद्रे शुभाः पापग्रहास्त्रिषष्ठलाभस्थितास्तत्पदमाहुरार्याः ॥ १४ ॥ गेहेशे व्ययराशिस्थे पित्रा-
द्यन्यविदेशगः ॥ अष्टमस्थे गृहेशे वा स्वयं संपादयेद्गृहम् ॥ १५ ॥ धनेशे लग्नभावस्थे कर्मेशे
धनमाश्रिते ॥ वाहने स्वोच्चखेटस्थे वाहनाधिपतिर्भवेत् ॥ १६ ॥ लग्नवाहनभाग्येशास्त्वन्योन्यं
केंद्रमाश्रिताः ॥ लग्ननाथे बलाढ्ये वा वाहनाधिपतिर्भवेत् ॥ १७ ॥ गोपुराद्यंशके वापि वाह-
नेशे बलान्विते ॥ लाभकर्मशुभाधीशैर्दृष्टेवाहनसंयुतः ॥ १८ ॥ परमोच्चांशके युक्ते भाग्येशे
केंद्रमाश्रिते ॥ ग्रहद्वये तुंगयुते बहुवाहनतुंगभाक् ॥ १९ ॥ धनाधिपेन संयुक्ते व्ययेशे स्वोच्च-
राशिगे ॥ भाग्याधिपेन संदृष्टे वाहनाधिपतिर्भवेत् ॥ १२० ॥ कर्माधिपे चतुर्थस्थे लाभनाथेन
संयुते ॥ भाग्यनाथेन वा युक्ते बहुवाहनदेशभाक् ॥ २१ ॥ उच्चद्वये कर्मगते लग्ननाथेन वीक्षिते ॥

भाग्याधिपेन वा दृष्टे वाहनाधिपतिर्भवेत् ॥ २२ ॥ सिंहासनांशकगते कर्मवाहनराशिपे ॥ लग्ने-
श्वरेण संदृष्टे बहुवाहनदेशभाक् ॥ २३ ॥ वाहनार्थतृतीयेषु भाग्यकर्मभवाधिपाः ॥ स्थिता
वाल्येर्थमानादिसंयुक्तो निधने शुभे ॥ २४ ॥ स्वोच्चे सुखेशे तन्नाथे केंद्रकोणसमन्विते ॥ वाहने
तुंगसंयुक्ते व्यये शुद्धे त्रियानभाक् ॥ २५ ॥ परमोच्चांशके शुक्रे कर्मेशे गृहसंयुते ॥ संभवे
तादृशे योगे वाद्यघोषादिभिर्युतः ॥ २६ ॥ शंखवादित्रघोषाद्यैः संयुक्तो भाग्यपे सुखे ॥ केंद्रो-
च्चकोणगे वापि कर्मेशे वाहनान्विते ॥ २७ ॥ शनिना संयुते कर्मनाथे केंद्रशुभान्विते ॥ लग्नेशे
वृद्धिभं याते पणवादिरवैर्युतः ॥ २८ ॥ कर्मभाग्यविलग्नेषु स्वोच्चेऽसौम्यग्रहाः स्थिताः ॥ दृष्टेषु
वा लग्नपेन यानांते दुःखमाप्नुयात् ॥ २९ ॥ कर्मषट्सोदरसुखभाग्यलग्नव्ययेश्वराः ॥ सुताधि-
पेन सहिता ह्यसंख्याव्यात्मदेशभाक् ॥१३०॥ सुखे शुभयुते नाथे केंद्रकोणोच्चसंयुते ॥ भाग्येशे
परमोच्चांशे सुखयानादिलाभभाक् ॥ ३१ ॥ मानेशे सुखराशिस्थे लाभे सौख्येशसंयुते ॥ लग्ने
शुभेन संदृष्टे बहुयानादिलाभभाक् ॥३२॥ मृदंगभेरीशंखाद्यकाहलादिरवैर्युतः ॥ राजयोगे
समुद्भूते कर्मपे सौख्यसंयुते ॥ ३३ ॥ बलाबलाच्छोभनदृष्टियोगात् प्रोक्तं तृतीयस्य फलं तु
राशेः ॥ चतुर्थराशेश्च फलं तथैव श्रीव्यंकटेशेन निरीक्ष्य सर्वम् ॥ १३४ ॥ इति श्रीसर्वार्थचिं-
तामणौ चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथ सुतभावः ॥ सुतभवनात्सुतबुद्धिमंत्रिणामपि मंत्रभोजनपितृभावान् ॥ हृदयोदरप्रवेशं विवेकशक्तिं च निर्दिशेन्मतिमान् ॥ १ ॥ नाथैः कलत्रात्मजधर्मभानां पुत्रादिचिंतां कथयेत्सजीवैः ॥ बुद्धिं तथा सोमसुतात्मजाभ्यां पितुस्तथैवात्मजभाग्यसूर्यैः ॥ २ ॥ पितुर्धनं याति सुखे सभानौ पुत्रे शशांके मरणं च मातुः ॥ सुते शुभे शोभनदृष्टियोगे पुत्रं ददात्येव तदा तदीशे ॥ ३ ॥ पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते ॥ शुभेन सहिते वापि पुत्रप्राप्तिर्न संशयः ॥४॥ लग्नेशे पुत्रभावस्थे पुत्रेशे बलसंयुते ॥ परिपूर्णबले जीवे पुत्रप्राप्तिर्न संशयः ॥ ५ ॥ पुत्रस्थानाधिपे जीवे परिपूर्णबलान्विते ॥ लग्नाधिपेन वा दृष्टे पुत्रप्राप्तिर्न संशयः ॥ ६ ॥ वैशेषिकांशके जीवे पुत्रेशेऽपि तथा स्थिते ॥ शुभग्रहेण वा दृष्टे पुत्रप्राप्तिं समादिशेत् ॥ ७ ॥ पुत्रस्थानगते वित्तनाथे पूर्णबलान्विते ॥ दृष्टे देवेंद्रगुरुणा पुत्रप्राप्तिर्न संशयः ॥ ८ ॥ लग्नपुत्राधिपौ युक्तावन्योन्यं वापि वीक्षितौ ॥ क्षेत्रे परस्परस्थौ वा पुत्रप्राप्तिर्न संशयः ॥ ९ ॥ लग्नपुत्राधिपौ केंद्रे शुभग्रहसमन्वितौ ॥ कुटुंबेशे बलाढ्ये तु पुत्रप्राप्तिर्न संशयः ॥ १० ॥ पुत्रस्थानाधिपस्थांशराशीशे शुभसंयुते ॥ शुभेन वीक्षिते वापि पुत्रप्राप्तिर्न संशयः ॥ ११ ॥ लग्नेशे दारभावस्थे भाग्येशे दारसंयुते ॥ द्वितीयेशे विलग्नस्थे पुत्रप्राप्तिर्न संशयः ॥१२॥ दारेशगृहसंयुक्तनवांशभ-

स. चि. ‖३०‖

वनाधिपे ॥ भाग्यवित्तविलग्नेशैर्दृष्टे तत्प्राप्तिमादिशेत् ॥ १३ ॥ पापमध्ये तु यद्भावे तदीशेपि
तथा स्थिते ॥ कारके पापसंयुक्ते पुत्रनाशं वदेत्तदा ॥ १४ ॥ भाग्यपुत्रकलत्रेशसंयुक्तनवभा-
गपाः ॥ पापांशगाः पापयुताः पुत्रनाशं वदेत्तदा ॥ १५ ॥ क्रूरांशे पुत्रभावेशे नीचमूढसमन्विते ॥
पापैर्दृष्टेऽथवा दुस्थे पुत्रनाशं वदेत्तदा ॥ १६ ॥ व्ययेशसंयुतांशेशत्र्यंशनाथसमन्विते ॥ दृष्टे
पुत्रेश्वरे तेन पुत्रार्तिं कथयंति हि ॥ १७ ॥ पुत्रस्थानाधिपे दुःस्थे क्रूरषष्ट्यंशसंयुते ॥ क्रूरग्रहेण
वा दृष्टे पुत्रनाशं वदेत्तदा ॥ १८ ॥ मृदंशादिसमायुक्ते पुत्रस्थानेश्वरे दृढे ॥ गोपुराद्यंशके वापि
पुत्रसिद्धिर्न संशयः ॥ १९ ॥ पुत्राधिपस्थांशपतौ विलग्ने लग्नेश्वरस्थांशपतौ सुतस्थे ॥ गुरु-
स्थितांशाधिपतौ च केंद्रे पुत्राप्तिमाहुर्मुनयो महांतः ॥ २० ॥ पारावतांशादियुते सुतेशे भाग्ये-
श्वरे तादृशभावयुक्ते ॥ लग्नेश्वरे शोभनदृष्टियुक्ते पुत्राप्तिमाहुर्मुनयो महांतः ॥ २१ ॥ वंशक्षया-
दिसहिते यदि सत्यमेतच्छास्त्राधिपारगमना मुनयो वदंति ॥ पुत्रादियोगमखिलं तदभावयोगं
प्रोक्तं विलोक्य मनसा च वदेत्सुविद्वान् ॥ २२ ॥ वंशस्यविच्छेदकरः प्रजातः चंद्रास्फुजित्पा-
पखगाः क्रमेण ॥ खं १० दार ७ सौख्येषु ४ युतास्तथैव लग्नेश्वरे चंद्रसुतेन युक्ते ॥ २३ ॥ पाप-
ग्रहा रिःफसुताष्टमस्था वंशस्य विच्छेदकरोऽर्थहीनः ॥ निशाकरे लग्नगते सजीवे तत्सप्तमे भूमिः

अ० ५ ‖३०‖

सुते शनौ वा ॥ २४ ॥ पापग्रहा बंधुगताश्च सर्वे वंशस्य विच्छेदकरोऽत्र जातः ॥ लग्नांत्यपुत्राष्टमराशियुक्तैः पापग्रहैर्वंशविनाशहेतुः ॥ २५ ॥ शुभेतरा रंध्रविलग्नरिःफे वंशस्य विच्छेदकरः सुतेऽब्जे ॥ दारस्थिते सोमसुते सशुक्रे पापे सुखे देवगुरौ सुतस्थे ॥ २६ ॥ रंध्रे शशांकात्सहिते तु पापैर्वंशस्य विच्छेदकरोऽत्र जातः ॥ पापे विलग्ने सुखगे शशांके लग्नेश्वरे पंचमराशियुक्ते ॥ २७ ॥ बलैर्विहीने यदि पुत्रनाथे वंशस्य विच्छेदकरोऽत्र जातः ॥ क्षीणे शशांके तनुभावयुक्ते मूढान्विते मंदगृहे सुरेज्ये ॥ २८ ॥ त्रिकोणगैः पापखगैश्च सर्वैः प्रागेव पुत्रस्य सुखाद्विनाशः ॥ चंद्रात्मजे पंचमराशियुक्ते लग्ने सुखे वा यदि पापयुक्ते ॥ २९ ॥ शुभेतरैः पंचमभावयुक्तैर्न दृश्यते पुत्रसुखं हि तेन ॥ जातो यदि स्यात्क्षितिसूनुलग्ने रंध्रे शनौ पंचमगे रवौ वा ॥ ३० ॥ पुत्रादिलाभं मुनयो वदंति कालांतरे शोभनदृष्टियोगात् ॥ लग्ने शनौ देवगुरौ तु रंध्रे व्यये कुजे पुत्रलाभश्चिरेण ॥ ३१ ॥ बुद्धिस्थानाधिपे सौम्ये शुभदृष्टिसमन्विते ॥ शुभग्रहाणां क्षेत्रे वा बुद्धिमान्नीतिमान् भवेत् ॥ ३२ ॥ परमोच्चांशके बुद्धिस्थाननाथेन वीक्षिते ॥ शुभग्रहाणां मध्यस्थे तीव्रबुद्धिं समादिशेत् ॥ ३३ ॥ कारके बलसंपूर्णे तदीशे शुभवीक्षिते ॥ बुद्धिस्थानेऽथवा सौम्ये तीव्रबुद्धिं समादिशेत् ॥ ३४ ॥ बुद्धिस्थानाधिपस्थांशराशीशे शुभवीक्षिते ॥

वैशेषिकांशके वापि तीव्रबुद्धिं समादिशेत् ॥ ३५ ॥ कारकस्थितराश्यंशनाथे केंद्रत्रिकोणगे ॥
बुद्धीश्वरेण संदृष्टे तीव्रबुद्धिं समादिशेत् ॥ ३६ ॥ शुभग्रहाणां मध्यस्थे बुद्धिराशौ शुभान्विते ॥
गुरौ केंद्रत्रिकोणे वा बुद्धिमार्गविशारदः ॥ ३७ ॥ बुद्धिस्थानाधिपे सौम्ये बुद्धिराशिगते गुरौ ॥
शुभग्रहाणां मध्यस्थे भावे बुद्धिं विनिर्दिशेत् ॥ ३८ ॥ बुद्धिस्थानेश्वरे केंद्रे शुभग्रहसमन्विते ॥
उच्चग्रहसमायुक्ते ग्रहणादिपटुर्भवेत् ॥ ३९ ॥ मृद्वंशादिसमायुक्ते नाथकारकखेचरे ॥ शुभग्रहेण
संदृष्टे धारणादिपटुर्भवेत् ॥ ४० ॥ गोपुराद्यंशके वापि धारणादिपटुर्भवेत् ॥ परेंगितज्ञो मेधावी
कारकस्थितभागपे ॥ ४१ ॥ केंद्रत्रिकोणसंयुक्ते कारकग्रहवीक्षिते ॥ नाथकारकसंयुक्तत्र्यंश-
भागपतौ शुभे ॥ ४२ ॥ चतुष्टये त्रिकोणे वा शुभदृष्टेंगितज्ञकृत् ॥ पंचमे पापसंयुक्ते तदीशे
पापसंयुते ॥ ४३ ॥ क्रूरषष्ट्यंशके वापि बुद्धिनाशो भवेत्तदा ॥ नीचमूढारिगेहस्थे पापखेचर-
वीक्षिते ॥ ४४ ॥ क्रूरषष्ट्यंशसंयुक्ते बुद्धिनाशो भवेत्तदा ॥ पंचमे मंदसंयुक्ते लग्नेशे मंदवीक्षिते
॥ ४५ ॥ तदीशे पापसंयुक्ते बुद्धिजाड्यं समादिशेत् ॥ मंदमांद्यगुसंयुक्ते पंचमे शुभवर्जिते ॥४६॥ ॥३१॥
तदीशे पापसंदृष्टे विस्मृतिः प्रायशो भवेत् ॥ बुद्धिर्विस्मृतिपूर्वा स्यात्कारके शुभसंयुते ॥४७॥
तदीशे पापसंयुक्ते क्रूरषष्ट्यंशकेपि वा ॥ सौम्ये तु बुद्धिभावस्थे गुरुशुक्रनिरीक्षिते ॥४८॥ तादृशे

बुद्धिनाथे वा सर्वेषां बुद्धिदो भवेत् ॥ ऊहापोहसमर्थः स्यात्तदीशे गोपुरांशके ॥ ४९ ॥ कारकस्थितराशीशे लग्ननाथेन वीक्षिते ॥ राजमंत्री भवेद्दाता वाक्पतौ बलसंयुते ॥ ५० ॥ बुद्धीश्वरेण संयुक्ते गोपुराद्यंशकान्विते ॥ आगामी सूचको मंत्री कारके केंद्रकोणगे ॥ ५१ ॥ भृगौ सौम्यसमायुक्ते दृष्टे ताभ्यां शुभांशके ॥ त्रिकालज्ञो भवेज्जीवे स्वांशे मृदंशसंयुते ॥ ५२ ॥ गोपुराद्यंशके वापि शुभांशे शुभवीक्षिते ॥ पुंग्रहे पुंगृहं प्राप्ते पुंभागे पुत्रनायके ॥ सुपुत्रजननं विद्यात् प्रथमं नात्रसंशयः ॥ ५३ ॥ स्त्रीराशौ स्त्रीग्रहे प्राप्ते स्त्रीभावे पुत्रनायके ॥ दारिकां प्रथमं विद्यात्पंढांशे षंढमादिशेत् ॥ ५४ ॥ कारकस्थितराशेर्वा पंचमे बिंदुसंख्यया ॥ नीचारिमूढगेहानां बिंदुं त्यक्त्वा सुतान्वदेत् ॥ ५५ ॥ पुत्रस्थानेशकिरणात्पुत्रभावांशकाद्वदेत् ॥ रश्मिजालैर्गुरोर्वापि बलोत्कर्षाद्वदेत्तथा ॥ ५६ ॥ लग्नपुत्रेश्वराभ्यां तु मित्रत्वेनैव मित्रता ॥ शत्रुत्वे शात्रवं प्रोक्तं समत्वे समता भवेत् ॥ ५७ ॥ लग्नपुत्रेश्वरौ खेटौ परस्परनिरीक्षितौ ॥ परस्परगृहांशस्थौ शुश्रूषां कारयेत्सुतः ॥ ५८ ॥ लग्नं पश्यति वा पुत्रनाथे लग्नान्विते यदि ॥ लग्नेश्वरः सुतर्क्षे वा पुत्रो वाक्यवशानुगः ॥ ५९ ॥ पुत्रस्थानेश्वरे दुःस्थे लग्नेशेनापि वीक्षिते ॥ संदृष्टे कुजराहुभ्यां नित्यं पितृविदूषकः ॥ ६० ॥ पंचमे गुरुशुक्राभ्यां सवित्रा सहितेऽथवा ॥ एतेषां भवने वापि सोयं

भोजयिता भवेत् ॥ ६१ ॥ तृतीयेशे तृतीयस्थे पंचमेशे सुखं गते ॥ शुभोच्चखेटसंयुक्ते जातो
भोजयिता भवेत् ॥ ६२ ॥ अन्नदानपरो नित्यं पंचमेशे शुभं गते ॥ शुभग्रहैः समायुक्ते
युक्तीशे शुभसंयुते ॥ ६३ ॥ हृदये पापसंयुक्ते तदीशे पापसंयुते ॥ पापग्रहाणां मध्यस्थे हृद्गतं
रोगमादिशेत् ॥ ६४ ॥ तन्नाथे नाशभावस्थे नाशस्थानेशसंयुते ॥ नीचारिमूढभावे वा हृद्गतं
रोगमादिशेत् ॥ ६५ ॥ तदंशस्थांशराशीशे क्रूरषष्ट्यंशसंयुते ॥ क्रूरग्रहेण संदृष्टे हृद्गतं शल्य-
मादिशेत् ॥ ६६ ॥ इति सुतभावः ॥ अथ षष्ठभावविचारः ॥ अरिभवनादारिचोरक्षतवि-
घ्नक्लेशनाभ्युदरदेशान् ॥ मधुरादिषडुपदंशान् ग्रहराश्युदितान्वदेत् प्राज्ञः ॥ १ ॥ षष्ठेश्वरे
क्रूरयुते विलग्ने रंध्रस्थिते वा व्रणदः शरीरे ॥ कर्मस्थिते तादृशखेचरेंद्रे व्रणप्रदोऽङ्गे शुभदृष्टि-
युक्ते ॥ २ ॥ पित्रादिभावादपि योजनीयं भावेशतत्कारकदृष्टियोगात् ॥ बलाबलेनापि विकल्प्य
सर्वं तेषां व्रणं तत् कथयंति तज्ज्ञाः ॥ ३ ॥ शिरोऽर्कादेर्मुखं कंठं श्रोत्रं नासा च गुह्यकम् ॥ पाणी
पार्श्वौ दृशौ पादौ प्रपदौ कुक्षिमादिशेत् ॥ ४ ॥ लग्नेशभूपुत्रशशांकपुत्राः सह स्थिताः सौख्य-
गृहे व्यये वा ॥ अपानरोगं त्वथवा पवित्रं पश्यंति षष्ठं मुनयो वदंति ॥ ५ ॥ शशांकतत्पुत्रवि-
लग्ननाथाः सराहवः केतुयुतास्तदंगे ॥ वैश्यं तु कुष्ठं मुनयो वदंति शुभेक्षितास्तत्र भवेत्तदा-

नीम् ॥ ६ ॥ विना विलग्नाधिपतिं ग्रहेषु लग्नस्थितेष्वत्र तु कुष्ठभाक् स्यात् ॥ पित्रादिकानां
फलमेवमाहुर्मुनीश्वराः कारकभावनाथैः ॥ ७ ॥ पैत्त्यं तु कुष्ठं कुजसंयुतेषु शैत्यं भवेन्मंदसम-
न्वितेषु ॥ रक्तं तदा सूर्यसमन्वितेषु ग्रहोक्तदेशे नियतं तदाहुः ॥ ८ ॥ लग्नेशषष्ठाधिपती दिने-
शयुक्तौ ज्वरं चंद्रसमन्वितौ चेत् ॥ जलेन गंडं क्षितिसूनुयुक्ते युद्धेन वा स्फोटकराशिभिर्वा
॥ ९ ॥ चित्तेन रोगेण बुधेन युक्तौ निर्व्याधिको जीवसमन्वितौ चेत् ॥ शुक्रेण भार्याविपदं वदंति
मंदेन नीचानिलरोगमाहुः ॥ १० ॥ सराहुकेतू यदि सर्पपीडा चोराग्निभीर्वातभयात् प्रमादः ॥
षष्ठेश्वरश्चंद्रसुतेन युक्तः साग्रुर्विलग्ने स्वयमत्र शिश्नम् ॥ ११ ॥ छिनत्त्यसौ सौम्यदृशा विहीने
सभूमिपुत्रौ यदि लिंगरोगात् ॥ कामेश्वरः शुक्रयुतो रिपुस्थः कलत्रषंढत्वमुदीरयंति ॥ १२ ॥
षष्ठेशलग्नाधिपती समंदौ केंद्रत्रिकोणे यदि बंधनं स्यात् ॥ सराहुकेतू यदि केंद्रकोणे वदंति
तज्ज्ञा निगडं तदानीम् ॥ १३ ॥ पित्रादितत्कारकभावनाथैः पित्रादिकानां फलमाहुरन्ये ॥
तत्तद्ग्रहाणां परिपाककाले त्वंतर्दशायामथवा वदंति ॥ १४ ॥ धर्मे शनौ वा सगुरौ तृतीये कर-
च्छिदोऽर्के निधने व्यये वा ॥ विधौ कलत्रे निधनान्वितो वा कुजेन युक्ते यदि वा सजीवे ॥१५॥
कर्मस्थिताश्चेद्यदि राहुमंदसौम्याः पदच्छेदयुतोऽत्र जातः ॥ शुक्रेज्यदृष्टे दिवसाधिनाथे सारे

शनौ वा फणिनाथयुक्ते ॥ १६ ॥ क्रूरादिषष्ट्यंशसमान्विते वा विच्छेदनं तच्छिरसो वदंति ॥
मंदे विलग्ने मदने सराहौ कर्मान्विते भार्गवनंदने च ॥ १७ ॥ कृष्णे शशांके मदराशियुक्ते
विच्छिन्नहस्तः स भवेत्पदेन ॥ भूसूनुलग्ने यदि वा तदंशे सूर्यान्विते कृष्णनिशाकरे तु ॥१८॥
फणींद्रचंद्रात्मजसंयुतेऽर्करश्म्याभिभूते ह्युदरस्य भेदः ॥ मंदोदये सौम्यदृशा विहीने सर्पार्क-
युक्ते यदि कृष्णचंद्रे ॥ १९ ॥ शस्त्रेण कुक्षेर्दलनं वदंति जातस्य दर्शे मुनयो महांतः ॥ क्षीणे
शशांके फणिनाथदृष्टे सौरे शिरस्यास्य निकृंतनं स्यात् ॥ २० ॥ लग्ने शनौ सोमसुते स्वगेहे
शौर्ये चतुर्थे सबुधेऽतिह्रस्वः ॥ २१ ॥ षष्ठाष्टमव्यये चंद्रे लग्ननाथेन वीक्षिते ॥ मंदमांद्यगुसंयुक्ते
तस्य दुर्मरणं वदेत् ॥ २२ ॥ नीचारातिविमूढांशे मंदे पापान्वितेक्षिते ॥ क्रूरषष्ट्यंशसंयुक्ते
तस्य दुर्मरणं वदेत् ॥ २३ ॥ रंध्रेश्वरस्थितत्र्यंशे पाशसर्पादिसंज्ञके ॥ दृक्काणे मरणं व्याधिरुद्बं-
धान्मरणं वदेत् ॥२४॥ मंदमांद्यगुसंयुक्ते रंध्रेशस्थत्रिभागपे ॥ तथाविधेऽर्कपुत्रे वा ह्युद्बंधान्मरणं
वदेत् ॥ २५ ॥ षष्ठाष्टमेशे भौमे वा विक्रमेशसमन्विते ॥ मंदमांद्यगुसंयुक्ते क्रूरांशे युद्धतो मृतिः
॥ २६ ॥ युद्धेन मरणं ब्रूयाच्छनियुक्तत्रिभागपे ॥ कुजेन वीक्षिते युक्ते भौमक्षेत्रे तदंशके ॥२७॥
रविभौमौ यदान्योन्यं परस्परनिरीक्षितौ ॥ परस्परगृहांशस्थौ द्वंद्वयुद्धान्मृतिं वदेत् ॥ २८ ॥

॥३३॥

अष्टमे बहवः पापा भौमराशिगतांशकाः ॥ क्रूरषष्ट्यंशकयुता सद्यस्तन्मरणं वदेत् ॥ २९ ॥
नीचमूढारिगेहस्थाः सौम्याः सर्वे पराजिताः ॥ पापांशस्थाः पापयुताः सद्यस्तस्य मृतिं वदेत्
॥ ३० ॥ सद्यः स्यान्मरणं तस्य शनिराहुदिनाधिपाः ॥ रंध्रेशवीक्षिताः सर्वे क्रूरांशा मूढसं-
युताः ॥ ३१ ॥ रोगस्थानगते सूर्ये तद्भावे पापसंयुते ॥ पापदृष्टियुते नाभौ पैत्तिकाद्व्रणमादि-
शेत् ॥ ३२ ॥ तथाभूते निशानाथे क्रूरदृष्टे तदंशके ॥ वातार्दितो भवेज्जातो रक्तपित्तार्दितः
कुजे ॥ ३३ ॥ श्लेष्मवातार्दिते सौम्ये तथाभूते विशेषतः ॥ जीवे तु विद्रधिर्वाच्यः शुक्रे मूत्राति-
साररुक् ॥ ३४ ॥ तथाभूते शनौ गुल्मरोगो वात्र विशेषतः ॥ राहुकेतुसमायुक्ते बाधा पैशा-
चिकी स्मृता ॥ ३५ ॥ चंद्रे षष्ठे कुजयुते भ्रांतिपंड्वादिरोगभाक् ॥ सारे चंद्रे रवियुते विसर्पा-
शूलरोगभाक् ॥ ३६ ॥ षष्ठे कुजे बुधयुते भृगुचंद्रनिरीक्षिते ॥ क्रूरांशकसमायुक्ते क्षयरोगं
वदंति हि ॥ ३७ ॥ शन्यारसहिते षष्ठे रविराहुनिरीक्षिते ॥ लग्नेश्वरे हीनबले दीर्घरोगी भवेन्नरः
॥ ३८ ॥ षष्ठे शनौ सगुलिके स्व्यारफणिवीक्षिते ॥ शुभैर्न दृष्टे युक्ते वा श्वासकासक्षयादि-
युक् ॥ ३९ ॥ जलराशिगते चंद्रे षष्ठे तद्भवनाधिपे ॥ जलर्क्षस्थविदा दृष्टे मूत्रकृच्छ्रादिकं
भवेत् ॥ ४० ॥ षष्ठे चंद्रे शनौ रंध्रे व्यये पापे विलग्नपे ॥ पापांशकसमायुक्ते पीनसं रोगमा-

दिशेत् ॥ ४१ ॥ बलहीनेऽरिनाथे वा लग्नस्थे वा धरासुते ॥ मूर्धार्तिर्मुखरोगो वा गुल्मविद्रधि-
भाग्भवेत् ॥ ४२ ॥ षष्ठेश्वरस्थितांशेशे रव्यादौ हि तथा भवेत् ॥ फलं पूर्वोक्तमप्यत्र क्रमात्तस्य
विनिर्दिशेत् ॥४३॥ शत्रुस्थानाधिपे केंद्रे पापग्रहनिरीक्षिते ॥ षष्ठे वा पापबाहुल्ये शत्रुपीडां विनि-
र्दिशेत् ॥ ४४ ॥ लग्नेशे शत्रुराशिस्थे तदीशे लग्नमाश्रिते ॥ मंदमांद्यगुसंयुक्ते शत्रुपीडां विनिर्दि-
शेत् ॥ ४५ ॥ पापग्रहेण संदृष्टे बलहीनेऽरिनायके ॥ पापांतरगते वापि शत्रुपीडां विनिर्दिशेत्
॥ ४६ ॥ शत्रुस्थानाधिपे दुःस्थे नीचमूढारिसंयुते ॥ लग्नेशे बलसंयुक्ते शत्रुनाशं वदेद्बुधः ॥४७॥
शुभग्रहेण संदृष्टे शत्रुस्थानाधिपे यदा ॥ शुभान्विते शुभक्षेत्रे तेन मैत्रीं वदेद्बुधः ॥ ४८ ॥ लग्ने-
शाद्बलहीने तु शत्रुस्थानाधिपे यदा ॥ शुभान्विते शुभैर्दृष्टे शत्रूणां मैत्रमादिशेत् ॥ ४९ ॥
लग्नेशे षष्ठभावस्थे षष्ठेशेन निरीक्षिते ॥ तौ वा विलग्नभावस्थौ ज्ञातिपीडां विनिर्दिशेत् ॥५०॥
गुरुशुक्रौ विलग्नस्थौ षष्ठभावेश्वरान्वितौ ॥ शन्यारफणिसंदृष्टौ ज्ञातिपीडां विनिर्दिशेत् ॥५१॥
लग्नाधिपे शुभयुते षष्ठे चंद्रेऽथवा शुभे ॥ केंद्रत्रिकोणगे सौम्ये ज्ञातिभिः सह जीवनम् ॥५२॥
ज्ञातयो बहवः संति षष्ठेशे देवपूजिते ॥ शुभान्विते शुभैर्दृष्टे मृदंशादिसमन्विते ॥ ५३ ॥ ज्ञाति-
क्षयं विजानीयात् षष्ठेशे पापसंयुते ॥ क्रूरांशनीचमूढादौ शुभदृग्योगवर्जिते ॥ ५४ ॥ पाराव-

तादिभागस्थे लग्नेशे शुभवीक्षिते ॥ ज्ञातीशे बलहीने वा तस्मादुत्कर्षतां व्रजेत् ॥ ५५ ॥
भाग्येशे षष्ठराशिस्थे षष्ठेशेन निरीक्षिते ॥ षष्ठेशे मंदभौमाभ्यां युते चोराग्निपीडनम् ॥ ५६ ॥
तदीशे गोपुरांशादौ दिवसेशेन वीक्षिते ॥ लग्नेशे बलसंपूर्णे ज्ञातीनामुपकारकृत् ॥ ५७ ॥ षष्ठे
सौम्ये शुभैर्दृष्टे तदीशे शुभसंयुते ॥ पापग्रहाणां मध्यस्थे सूपदंशप्रियो भवेत् ॥ ५८ ॥ उपदं-
शप्रियो नित्यं षष्ठे जीवे शशांकजे ॥ क्षेत्रे तयोर्वा संप्राप्ते मृद्वंशादिसमन्विते ॥ ५९ ॥ देवेज्ये
षष्ठभावेशे शुक्रे वा तस्य नायके ॥ मधुरादिप्रियो नित्यं गोपुराद्यंशकान्विते ॥ ६० ॥ शुक्रे
षष्ठे ससौम्ये वा शुभदृष्टे शुभांशके ॥ बलान्विते शुभांशस्थे नित्यं मधुरभाग् भवेत् ॥ ६१ ॥
पापग्रहेण संदृष्टे बुधे मधुरवर्जिते ॥ बुधेन युक्ते शुक्रेऽरौ त्वाम्लभाक् स नरो भवेत् ॥ ६२ ॥
षष्ठे शुक्रे भौमदृष्टे भौमे शुक्रे तदन्विते ॥ दिवसेशेन वा दृष्टे त्वाम्लभाक् स नरो भवेत् ॥ ६३ ॥
षष्ठेशे भौमसंयुक्ते राहुकेतुनिरीक्षिते ॥ भौमक्षेत्रगते वापि विप्रलंभादिचौर्यभाक् ॥ ६४ ॥ राहु-
केतुसमायुक्ते षष्ठे पापनिरीक्षिते ॥ क्रूरांशके तदीशे वा विप्रलंभादिचौर्यभाक् ॥ ६५ ॥ पुत्रा-
दीनामिदं योज्यं तत्तद्भावप्रकारकैः ॥ नास्तिकाय न वक्तव्यं वक्तव्यं सुजनाय वै ॥ ६६ ॥

अध्यायः पंचमः प्रोक्तः पंचषड्भाववाचकः ॥ विचित्रार्थसमायुक्तो वेंकटेशेन धीमता ॥ ६७ ॥
इति सर्वार्थचिंतामणौ पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥

अथ सप्तमभावविचारः ॥ युवतिपदादुद्वाहं भार्यापतिसूपदधिगुडक्षीरम् ॥ आगमगमनमदाप्तिं ब्रूयान्मूत्राशयं च नष्टधनम् ॥ १ ॥ शुक्रे कलत्रे त्वतिकामुकः स्याद्बुधेऽन्यदारे निरतो गुरौ तु ॥ स्वदारसक्तो दिननाथपुत्रे कुदाररम्ये सुपतौ सुदारः॥२॥कुजे बहुस्त्रीषु रतः कुलघ्नो भानौ कुटुंबी बहुदारसक्तः ॥ लग्नस्थिता वित्तकलत्रशत्रुनाथाः सशुक्रा यदि पापयुक्ताः ॥ ३ ॥ जातः परस्त्रीषु रतः कुमार्गी शुभेक्षिताश्चेन्न तथा भवेच्च ॥ लग्नारिपौ पापयुतौ यदि स्याज्जातः परस्त्रीषु रतः कुमार्गी ॥ ४ ॥ लग्नेश्वरे शत्रुकुटुंबनाथे पापैर्युते वा यदि दारराशौ ॥ सौरे सपापे यदि दारनाथे जातः परस्त्रीषु रतः कुटुंबे ॥ ५ ॥ सराहुकेतौ यदि दारनाथे पापेक्षिते वा व्यभिचारयोगः ॥ कर्मेशवित्तेशकलत्रनाथा मानस्थिता जारमुदाहरंति ॥ ६ ॥ एको ग्रहस्तेषु चतुर्थराशौ जातः परस्त्रीगमनं प्रयाति ॥ पुत्रेश्वरे दारपतौ बलाढ्ये दृष्टे युते वा त्वरिनायकेन ॥ ७ ॥ जातोऽनपत्यो यदि तत्कलत्रे जारात्सुतः स्याच्छुभखेटदृष्टे ॥ दारेश्वरे पापयुते कुटुंबे भौमेन दृष्टे यदि जारपुत्रः ॥ ८ ॥ धीधर्मनाथौ सकलत्रनाथौ दुःस्थानगौ हीनबलौ शुभेन ॥ दृष्टे सुते

दारबहुत्वयोगे त्वपुत्रयोगं मुनयो वदंति ॥ ९ ॥ क्षीणे शशांके यदि पापयुक्ते दारस्थिते त्वन्य-कलत्रगामी ॥ लग्ने सपापे यदि दारनाथे जातः परस्त्रीषु रतः कुमार्गी ॥ १० ॥ सुतेशे दारभं याते तदीशे पापसंयुते ॥ शुक्रो बलविहीनश्चेद्भार्या गर्भेण म्रीयते ॥ ११ ॥ नीचे भृगौ वा यदि वा शशांके नीचस्थितेऽत्रांबुनि दारहानिः ॥ उद्बंधनात्तन्मरणं वदंति दारेश्वरे पाशभुजंगमाख्ये ॥ १२ ॥ द्रेष्काणभागे विषभक्षणाद्वा मांद्यन्विते दारपतौ सराहौ ॥ स्वर्क्षे कुटुंबाधिपतौ कलत्र-नाथे यदा त्वेककलत्रभाक् स्यात् ॥ १३ ॥ ताभ्यां समेतैर्ग्रहनायकैर्वा कलत्रसंख्यां प्रवदंति संतः ॥ कलत्रनाथस्थितराशिनाथसंयुक्तखेटैरपि वाच्यमेतत् ॥ १४ ॥ कलत्रेशे बहुगुणे तुंगव-क्रादिहेतुभिः ॥ बहुभार्या नरं विद्यादुदयर्क्षगतेऽपि वा ॥ १५ ॥ भार्याद्वयं वदेत्तत्र लग्नेशे नाश-राशिगे ॥ कलत्रे पापसंयुक्ते कुटुंबेशे तथाविधे ॥ १६ ॥ शन्यारफणिसंयुक्ते कलत्रेशे यदा भवेत् ॥ क्रूरषष्ट्यंशके वापि कलत्रमरणं वदेत् ॥ १७ ॥ शुभग्रहेण संयुक्ते कलत्रेशेऽरिनीचगे ॥ पापे कलत्रराशिस्थे विवाहद्वयमादिशेत् ॥ १८ ॥ कारके पापसंयुक्ते नीचराश्यंशकेऽपि वा ॥ पापग्रहेण संदृष्टे विवाहद्वयमादिशेत् ॥ १९ ॥ कलत्रकारकश्चंद्रो ज्ञो गुरुर्वाथवा भृगुः ॥ मध्ये बलिष्ठो यस्तेषां तस्मात्सर्वं निरूपयेत् ॥२०॥ कलत्रे वा कुटुंबे वा पापदृग्योगसंभवे ॥ तदीशे

बलहीने तु कलत्रांतरभाग्भवेत् ॥ २१ ॥ सप्तमे चाष्टमे पापे व्यये भूसुतसंयुते ॥ अदृश्ये यदि नाथेन कलत्रांतरभाग्भवेत् ॥ २२ ॥ वित्ते पापबहुत्वे तु कलत्रे वा तथाविधे ॥ तदीशे पापसं-दृष्टे कलत्रत्रयभाग्भवेत् ॥ २३ ॥ लग्ने कुटुंबे दारे वा पापखेचरसंयुते ॥ दारेशे नीचमूढादौ कलत्रत्रयभाग्भवेत् ॥२४॥ नीचमूढारिभागस्थे लग्नेशे दारपेऽथवा ॥ क्रूरषष्ट्यंशके वापि कल-त्रांतरभाग्भवेत् ॥ २५ ॥ दारेशस्थनवांशेशे नीचमूढारिभांशके ॥ पापांतरे पापदृष्टेकलत्रांतर-भाग्भवेत् ॥ २६ ॥ एवं कुटुंबनाथेन कारकस्थांशपेन वा ॥ पापांतरे दारगृहे तन्नाथेऽपि कलत्र-हा ॥ २७ ॥ लग्नेश्वरात्कर्मगते सोमपुत्रे बलान्विते ॥ दारेशाद्विक्रमे चंद्रे बहुस्त्रीसहितो भवेत् ॥ २८ ॥ व्ययार्थेशौ तृतीयस्थौ गुरुणा च निरीक्षितौ ॥ भाग्यनाथेन वा दृष्टौ बहुस्त्रीसहितो भवेत् ॥ २९ ॥ केंद्रत्रिकोणे दारेशे स्वोच्चमित्रस्ववर्गगे ॥ कर्माधिपेन वा युक्ते बहुस्त्रीसहितो भवेत् ॥ ३० ॥ लाभदारेश्वरौ युक्तौ परस्परनिरीक्षितौ ॥ बलाढ्यौ वा त्रिकोणस्थौ बहुस्त्रीसहितो भवेत् ॥ ३१ ॥ भाग्येशे दारराशिस्थे दारेशे सुखभं गते ॥ भावेशे लाभनाथे वा केंद्रे बहुक-लत्रभाक् ॥ ३२ ॥ दारेशसंयुक्तनवांशनाथयुक्तांशनाथे सति सौम्ययुक्ते ॥ पारावतांशादिगते बलाढ्ये जातः शतस्त्रीसहितो नरः स्यात् ॥ ३३ ॥ कुटुंबनाथस्थितराशिनाथसंयुक्तराश्यंशपतौ

बलाढ्ये ॥ मृद्वंशके गोपुरभागयुक्ते जातः शतस्त्रीद्विगुणेन युक्तः ॥ ३४ ॥ तत्कारकस्थांशप-
युक्तराशिनाथस्थितांशाधिपतौ च केंद्रे ॥ मृद्वंशके गोपुरभागयुक्ते जातस्य वाच्या त्रिशती
वधूनाम् ॥ ३५ ॥ दारेशे गोपुरांशस्थे कर्मेशे दारराशिगे ॥ तथाविधे कुटुंबेशे दशसंख्यकल-
त्रभाक् ॥ ३६ ॥ एवं पुत्रादिभावानां कलत्रादिकमादिशेत् ॥ दारेशे पापसंयुक्ते दारे वा पापसं-
युते ॥ ३७ ॥ दारेशस्थांशपे पापे कुस्त्रीभाक् स नरो भवेत् ॥ क्रूरषष्ट्यंशके दारनाथे कुस्त्री-
युतो भवेत् ॥ ३८ ॥ नीचांशे नीचसंयुक्ते दारनाथे च कारके ॥ कुस्त्रीयुतो भवेज्जातः शुभदृ-
ष्टिविवर्जिते ॥ ३९ ॥ दारेशे शुभसंयुक्ते शुभखेचरवीक्षिते ॥ शुभग्रहाणां मध्यस्थे सत्कलत्रा-
दिभाग्भवेत् ॥ ४० ॥ दारेशे शुभराश्यंशे कारके वा तथाविधे ॥ कर्मेशे बलसंयुक्ते सत्कलत्र-
समन्वितः ॥ ४१ ॥ स्वोच्चे मित्रे स्ववर्गे वा गोपुराद्यंशके भृगौ ॥ षष्ट्यंशे मृदुभागस्थे सत्कल-
त्रसमन्वितः ॥ ४२ ॥ गुरुणा सहिते दृष्टे दारनाथे बलान्विते ॥ कारके वा तथाभावे पत्नी व्रत-
परायणा ॥ ४३ ॥ कलत्रेशे रवौ वापि भृगौ सौम्यनिरीक्षिते ॥ गुरुयुक्ते कलत्रे वा धर्मशीला
पतिव्रता ॥ ४४ ॥ कलत्राधिपतौ केंद्रे शुभग्रहनिरीक्षिते ॥ शुभांशे शुभराशौ वा पत्नी पति-
व्रता भवेत् ॥ ४५ ॥ कलत्रेशे रवौ वापि पापराश्यंशसंयुते ॥ पापान्विते पापदृष्टे पत्नी पाप-

परायणा ॥ ४६ ॥ भानौ कलत्राधिपतौ बलाढ्ये शुभान्विते शोभनराशिभागे ॥ शुभग्रहेणापि निरीक्षिते वा लग्नेशमित्रे पतिभक्तियुक्ता ॥ ४७ ॥ दारेश्वरे वा कुमुदात्मबंधौ पापान्विते पापनिरीक्षिते वा ॥ पापांशके पापगृहांतरस्थे कुमार्गचारी कठिनापराद्धा ॥ ४८ ॥ सौम्यांशके सौम्यगृहान्विते वा मित्रोच्चगेहे मृदुभागयुक्ते ॥ चंद्रे कलत्राधिपतौ च शुक्रे पुण्या सुशीला सुचरित्रयुक्ता ॥ ४९ ॥ दाराधिपे हीनबले धराजे क्रूरादिषष्ट्यंशसमन्विते वा ॥ निम्नारिमूढे विहगेऽरिभावे दुष्टान्यसक्ता पतिकर्कशा वा ॥ ५० ॥ मित्रोच्चवर्गे यदि दारनाथे शुभान्विते सौम्यदृशा समेते ॥ पारावतांशादिगते बलाढ्ये क्रूरापि पत्युर्गुणमार्गयुक्ता ॥ ५१ ॥ दाराधिपे सोमसुते सपापे नीचारिमूढे यदि नाशभावे ॥ पापांतरे पापदृशा समेते जाता पतिघ्नी कुलनाशकारी ॥ ५२ ॥ सुपुत्रसौख्यान्वितधर्मशीला व्रतोपवासादिविशुद्धदेहा ॥ सौम्ये कलत्राधिपतौ बलाढ्ये मित्रोच्चवर्गे यदि गोपुरांशे ॥ ५३ ॥ भृगोः सुते दारपतौ सपापे नीचान्विते नीचभमूढगेहे ॥ क्रूरादिषष्ट्यंशसमन्विते वा वेश्यासमाना कठिना हि चोरा ॥५४॥ शुक्रे कलत्राधिपतौ बलाढ्ये शुभान्विते शोभनखेचरांशे ॥ मित्रोच्चवर्गे स्वगृहे मृदुस्थे वाचाटकी पुत्रवती गुणाढ्या ॥ ५५ ॥ जारातिदुष्टा कुलदूषणा स्यान्मंदे कलत्राधिपतौ सपापे ॥ नीचांशके

नीचगृहेऽरिगेहे पापेक्षिते पापवियच्चरांशे ॥ ५६ ॥ परोपकारी द्विजदेवभक्ता स्त्री ब्रह्मवादी गुरु-
दृष्टियुक्ते ॥ शुभेक्षिते धर्मरता सुशीला मंदे कलत्राधिपतौ बलाढ्ये ॥ ५७ ॥ सराहुकेतौ मद-
नेऽन्यसक्ता पापेक्षिते पापरता कुशीला ॥ क्रूरांशगे भर्तृविषप्रदा स्याल्लोकापवादान्वितकर्कशा
स्यात् ॥ ५८ ॥ दारेश्वरे सन्निहिते विलग्ननाथस्य बाल्ये परिणीतमाहुः ॥ लग्नात्कलत्राच्छु-
भखेचरेन्द्रे समीपराशौ यदि तत्तथैव ॥ ५९ ॥ लग्ने कुटुंबे यदि दारभावे शुभान्विते शोभन-
वर्गयुक्ते ॥ तदीश्वरे शोभनदृष्टयुक्ते बाल्ये विवाहादिकमाहुरार्याः ॥ ६० ॥ पारावतांशादिगते
कलत्रनाथे कुटुंबाधिपतौ बलाढ्ये ॥ मृद्वाख्यभागे तनुभावनाथे बाल्ये विवाहे मुनयो वदंति
॥ ६१ ॥ भाग्यं विवाहात्परतो वदंति शुक्रेऽस्तगे चोपचयान्विते वा ॥ कुटुंबपे तादृशभावयुक्ते
लग्नेश्वरे वा शुभदृष्टियोगे ॥ ६२ ॥ तत्कारके दारपतौ कुटुंबनाथे विलग्नाधिपतौ च दुःस्थे ॥
नीचारिमूढांशगते सपापे भाग्यं विवाहात्प्रविनाशमेति ॥ ६३ ॥ क्रूरादिषष्ट्यंशसमन्वितेऽपि
तत्कारके तादृशखेचरेंद्रे ॥ शुभान्विते शोभनदृष्टियाते नाशात्परं भाग्यमुपैति जातः ॥ ६४ ॥
क्रूरे कलत्रेशयुते त्रिकोणे तत्कारके पापसमन्विते वा ॥ कुटुंबराशौ यदि वात्र माने दूरे विवा-
हात्कथयंति संतः ॥ ६५ ॥ माने सपापे यदि वा कुटुंबे भाग्येऽथवा पापयुते कलत्रे ॥ क्रूरांशके

क्रूरनिरीक्षिते वा दूरे विवाहात्कथयंति संतः ॥ ६६ ॥ पुत्रादिभावेष्वयमेव मार्गस्तं चिंतयित्वा
प्रवदेत्सुतादीन् ॥ लग्नेश्वराद्धीनबले कलत्रनाथेऽरिभागांशयुते विमूढे ॥ ६७ ॥ नीचांशके नीच-
समन्विते वा निकृष्टजातौ हि कलत्रलाभः ॥ लग्नेश्वरात्पूर्णबले कलत्रनाथे शुभांशे शुभदृष्टियुक्ते
॥ ६८ ॥ वैशेषिकांशे परमोच्चभागे उत्कृष्टजातौ हि कलत्रलाभः ॥ लग्नेश्वरे हीनबले कलत्र-
नाथात्सपापे यदि नीचभागे ॥ ६९ ॥ नाशस्थिते वान्ववरोहभागे कलत्रजातेः स्वयमत्र हीनः ॥
तस्माद्बलाढ्ये तु विलग्ननाथे त्वारोहभागे परमोच्चभांशे ॥ ७० ॥ केंद्रत्रिकोणे यदि वा ससौम्ये
श्रेष्ठः कलत्रात्स्वयमेव जातः ॥ कलत्रनाथाद्यदि वा कलत्रराशेः कुटुंबाधिपतेर्वदेद्वा ॥ ७१ ॥
बलेन साम्ये समजातिमाहुः स्त्रियं सुशीलां पतिभक्तिचित्ताम् ॥ लग्नेश्वरस्यापि कलत्रनाथे
शत्रौ तदीयस्त्विह शत्रुभूतः ॥ ७२ ॥ मित्राणि ते तस्य कुलोद्भवाश्च मित्रे विलग्नाधिपतेस्त-
दानीम् ॥ दारेश्वरस्यापि विलग्ननाथे शत्रौ तदीयास्त्वरयस्ततोऽन्ये ॥ ७३ ॥ कलत्राधिपते-
र्वर्णे राशेर्वा कारकस्य च ॥ सर्वोत्तमबलस्यैव तेषां मध्ये विनिर्दिशेत् ॥ ७४ ॥ सुगुणा रूपसं-
पन्ना तस्मिन् गुर्वच्छवीक्षिते ॥ पापेक्षिते पापयुक्ते कुरूपा दुर्गुणा भवेत् ॥ ७५ ॥ कलत्रनाथ-
स्थितभं तदीयं राशिं कलत्रस्य विदुर्महांतः ॥ तस्योच्चनीचं यदि वा कलत्रराशिं तदंशत्रितयं

तदीयम् ॥ ७६ ॥ कलत्रराशित्रितयेऽथवा स्यात्तदीशसंयुक्तभकोणराशौ ॥ कलत्रराशिं सम्रु-
दाहरंति प्रोक्तान्यराशौ यदि नास्ति पुत्रः ॥ ७७ ॥ गोसिंहकन्यादिषु जन्मराशिः स्त्रीणां
भवेज्जन्मनि वाल्पपुत्रा ॥ शुभग्रहैराक्रमितेषु तेषु सुतान्वदेत्तत्र बहून् गुणाढ्यान् ॥ ७८ ॥
वंध्यासंगो मदे भानौ चंद्रे दासीसमाः स्त्रियः ॥ कुजे रजस्वलासंगो वंध्यासंगश्च कीर्तितः
॥ ७९ ॥ बुधे वेश्यार्थहीना वा वणिक्स्त्री वा प्रकीर्तिता ॥ गुरौ ब्राह्मणभार्या स्याद्गर्भिणीसंगमो
भृगौ ॥ ८० ॥ हीना वा पुष्पिता वा स्यान्मंदराहुफणीश्वरैः ॥ राहौ च गर्भिणीसंगः कृष्णया
कुब्जया शनौ ॥ ८१ ॥ एवं सुखस्थितैरेतैरीदृक्स्त्रीसंगमूह्यताम् ॥ सूर्याद्यैः सुखगैर्वाच्यो वाहनं
गृहनिर्णयः ॥ ८२ ॥ वनं गृहं च कुड्यं स्याद्विहारो देवतालयम् ॥ जलं हरिगजस्थानमिति
स्थानं निरूप्यताम् ॥ ८३ ॥ पापैर्युक्ते चतुष्केंद्रे चतुष्पान्मैथुनं वदेत् ॥ पापैर्दृष्टेषु सर्वेषु केंद्रे-
ष्वेवं विनिर्दिशेत् ॥ ८४ ॥ केन्द्रे कोणे पापयुते पशुवन्मैथुनं वदेत् ॥ मंदे पापान्विते वापि समां-
दौ तादृशं वदेत् ॥ ८५ ॥ मंदे सूर्ये सुखे भौमे पशुवन्मैथुनं वदेत् ॥ राहौ कलत्रे भौमे वा सुखे
तादृशमैथुनम् ॥ ८६ ॥ मदेशे भृगुसंदृष्टे भौमक्षेत्रगतेऽथवा ॥ भृगुणा सहिते वापि भगचुंबन-
भाग्भवेत् ॥ ८७ ॥ एवं कुटुंबनाथेन भगचुंबनभाग् भवेत् ॥ कर्मेशे मंदसंदृष्टे भौमक्षेत्रगते-

ऽथवा ॥ भृगुणा सहिते वापि भगचुंबनभाग्भवेत् ॥ ८८ ॥ लग्नेशे नीचराश्यादौ स्थिते तादृ-
शचुंबनम् ॥ एवं कुटुंबनाथेन भगचुंबनभाग्भवेत् ॥ ८९ ॥ कुजे कृशस्तनी मंदे राह्वादौ लंब-
नस्तनी ॥ कठिनोर्ध्वकुचा भानौ शेषैः स्थूलोत्तमस्तनी ॥ ९० ॥ पापेनैकेन सहिते वैलक्षण्य-
कुचा भवेत् ॥ दारेशे पापखेटे वा शुभे वा तादृशस्तनी ॥ ९१ ॥ शुभद्वयेन सहिते दारेशेऽपि
तथाविधे ॥ समस्तनी भवेत्पत्नी पापयोगेऽन्यथा भवेत् ॥ ९२ ॥ अतिस्थूलस्तनी पत्नी सशुभे
दारनायके ॥ जलग्रहे जलर्क्षस्थे गुरुणापि निरीक्षिते ॥ ९३ ॥ रवौ वा भूमिपुत्रे वा मंदमांद्य-
गुसंयुते ॥ दाराधिपे पापभागे भगदैर्घ्यं विनिर्दिशेत् ॥ ९४ ॥ तदीशौ गुरुशुक्रौ वा शुभांश-
सहितौ यदा ॥ समं भगं भवेत्तस्याः पापयुक्ते तु दैर्घ्यकम् ॥ ९५ ॥ शनिचंद्रविदां मध्ये
यत्रैकस्मिन्मदेश्वरे ॥ ह्रस्वं भगं समादिष्टं स्त्रियामेवं विनिर्दिशेत् ॥ ९६ ॥ कलत्रेशे जलर्क्षस्थे
कारके वा तथाविधे ॥ जलर्क्षे दारभावे वा पूर्णचंद्रनिरीक्षिते ॥ ९७ ॥ चंद्रे जलर्क्षे दारस्थे
जलस्थभृगुवीक्षिते ॥ जलर्क्षस्थविदा दृष्टे स्त्रीगुह्यस्यार्द्रता भवेत् ॥ ९८ ॥ पूर्णे शशांके दारस्थे
जलराश्यंशकेऽपि वा ॥ जलस्थगुरुसंदृष्टे सततं त्वार्द्रता भवेत् ॥ ९९ ॥ परमोच्चांशके शुक्रे
जलराशिगतेऽपि वा ॥ भानुना संयुते वापि मैथुनादेव तादृशम् ॥ १०० ॥ दारेशे शुष्करा-

शिस्थे दारे वा शुष्कसंज्ञके ॥ शुष्कग्रहेण संयुक्ते त्वनार्द्रं गुह्यमादिशेत् ॥ १ ॥ पापक्षेत्रे पापमध्ये दारेशेऽपि तथाविधे ॥ पापदृग्योगसंजाते त्वनार्द्रं गुह्यमादिशेत् ॥ २ ॥ सप्तमेशे गुरौ दृष्टे शोभनांशसमन्विते ॥ सौम्यांशे सौम्यसंदृष्टे सूपदध्याज्यभाग्भवेत् ॥ ३ ॥ सप्तमस्थबुधे दृष्टे गुरुणाबलसंयुते ॥ भुक्तीशेनापि संदृष्टे सूपदध्याज्यभाग्भवेत् ॥ ४ ॥ दारस्थे भृगुपुत्रे वा पूर्णचंद्रानिरीक्षिते ॥ पापैरयुक्ते दृष्टे वा सूपदध्याज्यभाग्भवेत् ॥ ५ ॥ रवौ वा भूमिपुत्रे वा सप्तमेशे शुभेक्षिते ॥ भुक्तिस्थानगते वापि कदाचिद्दधिसूपभाक् ॥ ६॥ पापे सप्तमभावस्थे तदीशे पापसंयुते ॥ क्रूरषष्ट्यंशके वापि घृतसूपादिहानिभाक् ॥ ७॥ चंद्रे गुरौ वा दारेशे जलराश्यंशसंभवे ॥ जलग्रहेण वा दृष्टे क्षीरपानादिभाग्भवेत् ॥ ८॥ सप्तमेशस्थितांशेशे शुभदृष्टिसमन्विते ॥ शुभग्रहांशके वापि गुडक्षीरादिपानभाक् ॥ ९ ॥ बहवः सप्तमे पापाः षष्ठे वा रंध्रभेऽपि वा ॥ क्रूरषष्ट्यंशसंयुक्ता मूत्रकृच्छ्रं विनिर्दिशेत् ॥ १० ॥ इति सप्तमभावस्थो निश्चितोथ विचित्रयुक् ॥ षष्ठाध्यायो मया प्रोक्तो व्यङ्कटेशेन धीमता ॥ ११ ॥ इति सर्वार्थचिंतामणौ षष्ठोऽध्यायः ॥ ६ ॥

अथाष्टमभावविचारः ॥ मरणाज्जीवितमरणं गुह्यस्थानं च मरणहेतुं च ॥ अन्नसुखं भृतिदंशं परिभवमपि चिंतयेत् प्राज्ञः ॥ १ ॥ रंध्रेश्वरे पापयुतेऽत्यराशावल्पायुरस्येति वदंति षष्ठे ॥

तत्रापि लग्नेश्वरयोगजातो स्वल्पायुरस्येति वदंति संतः ॥ २ ॥ स्वक्षेत्रसंस्थे यदि रंध्रनाथे दीर्घा- युराहुर्मुनयो महांतः ॥ मंदेन वा चिंत्यविशेषमायुः स्वक्षेत्रमित्रोच्चगृहस्थितेन ॥ ३ ॥ रंध्रेश्वरे- णापि युते विलग्ननाथे रिपौ वा व्ययराशियुक्ते ॥ षष्ठांत्यपे वा यदि लग्नयुक्ते दीर्घायुरस्येति शुभेक्षितश्चेत्॥४॥कर्मेश्वरेणापि विचिंत्य मायुर्दीर्घं सुहृत्स्वोच्चयुतेन तेन॥ केंद्रस्थितैः कर्मवि- लग्नरंध्रनाथैस्तथैवायुरुदाहरंति ॥ प्रोक्तं ग्रहैर्व्योमचरैस्त्रिभिर्वा सभानुजैः केंद्रगतैस्तथैव ॥ ५ ॥ केंद्रान्विते विलग्नेशे गुरुशुक्रसमन्विते ॥ ताभ्यां निरीक्षिते वापि दीर्घमायुर्विनिर्दिशेत् ॥ ६ ॥ स्वक्षेत्रकोणादिगतैर्विशेषाद्वदंति दीर्घायुरुदारचित्ताः ॥ ७ ॥ चतुरस्रे शुभैर्युक्ते लग्नेशे शुभसं- युते ॥ गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् ॥ ८ ॥ त्रिषडायगताः पापाः शुभाः केंद्रत्रिको- णगाः ॥ लग्नेशे बलसंयुक्ते पूर्णमायुर्विनिर्दिशेत् ॥ ९ ॥ षट्सप्तरंध्रभावेषु शुभेषु सहितेषु च ॥ त्रिषडायेषु पापेषु पूर्णमायुर्विनिर्दिशेत् ॥ १० ॥ रंध्राधिपे विलग्नस्थे गुरुशुक्रयुतेक्षिते ॥ लग्नेशे केंद्रभावे वा दीर्घमायुर्विनिर्दिशेत् ॥ ११ ॥ उच्चाश्रितैस्त्रिभिः खेटैर्लग्ने रंध्रेशसंयुते ॥ रंध्रे पाप- विहीने तु दीर्घमायुर्विनिर्दिशेत् ॥ १२ ॥ रंध्रस्थितैस्त्रिभिः खेटैः स्वोच्चमित्रस्वगेहगैः ॥ लग्नेशे बलसंयुक्ते दीर्घमायुर्विनिर्दिशेत् ॥ १३ ॥ पारावतादिभागस्थाः पापाः सर्वे शुभास्तथा ॥ केंद्र-

त्रिकोणनिलयाः पूर्णमायुर्विनिर्दिशेत् ॥ १४ ॥ षष्ठाष्टमे व्यये पापे लग्नेशे दुर्बले यदि ॥ अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते ॥ १५ ॥ क्रूरषष्ट्यंशके वापि रंध्रेशे भानुजेऽपि वा ॥ पापान्विते पापदृष्टे स्वल्पमायुर्विनिर्दिशेत् ॥ १६ ॥ चतुष्टयगते पापे शुभदृष्टिविवर्जिते ॥ बलहीने विलग्नेशे स्वल्पमायुर्विनिर्दिशेत् ॥ १७॥ व्ययार्थौ पापसंयुक्तौ शुभदृष्टिविवर्जितौ ॥ क्रूरषष्ट्यंशके वापि स्वल्पमायुर्विनिर्दिशेत् ॥ १८॥ आयुर्योगास्त्रिधा प्रोक्ताः स्वल्पमध्यचिरायुषः ॥ द्वात्रिंशत्पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् ॥ १९ ॥ सप्तत्याः प्राक् ततः पूर्णमायुरत्र वदंति हि ॥ अल्पायुर्दिननाथस्य शत्रुर्लग्नाधिपो यदि ॥ २० ॥ समत्वे मध्यमायुः स्यान्मित्रे दीर्घायुरादिशेत् ॥ बलहीने विलग्नेशे जीवे केंद्रत्रिकोणगे॥ २१ ॥ षष्ठाष्टमव्यये पापे मध्यमायुरुदाहृतम्॥ शुभे केंद्रत्रिकोणस्थे शनौ बलसमन्विते ॥ २२ ॥ षष्ठे वाप्यष्टमे पापे मध्यमायुरुदाहृतम् ॥ लग्ने त्रिकोणे केंद्रे वा मध्यमायुश्चमिश्रिते ॥ २३ ॥ अल्पायुर्योगजातानां विपत्पाकोमृतिप्रदः ॥ मध्यमे प्रत्यरिदशा मृतिं दद्याद्विशेषतः ॥ २४ ॥ वधभेशदशा कष्टा पूर्णायुर्योगसंज्ञके ॥ योगायुरिति निश्चित्य जातस्यैवं वदेद्बुधः ॥ २५ ॥ आयुर्विलग्नाधिपती बलेन हीनौ धरासूनुव्रणेशयुक्तौ ॥ युद्धे मृतिं तस्य वदंति तज्ज्ञाः शस्त्रेण वा तन्मरणं विशेषात् ॥ २६ ॥

रंध्रांगनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ समंदौ ॥ तद्भुक्तिकालेऽप्यथवा विपाके
शस्त्रेण चोरैर्मरणं प्रयाति ॥ २७॥ रंध्रांगपौ वाहननाथयुक्तौ तस्मान्मृतिं तस्य वदंति तज्ज्ञाः ॥
मृतिं त्वजीर्णाद्गुरुसंयुतौ तौ देहेशजीवौ रिपुगावजीर्णात् ॥२८॥ लग्नेश्वरे वाहननाथयुक्ते वागी
श्वरेणापि युतौ त्वजीर्णात् ॥ देहेश्वरे वाहनवित्तभावनाथान्विते वा मरणं त्वजीर्णात् ॥ २९ ॥
रंध्रेशयोगान्मरणं दशायामंतर्दशायामथवा वदंति ॥ पित्रादिभावाधिपयोगदृष्ट्या पित्रादिका-
नां मरणं तथैव ॥ ३० ॥ भुक्त्यंगपौ भानुसुतेन युक्तौ दुस्थानगौ वा विषभक्षणेन ॥ राहुध्वजा-
भ्यां सहितौ च दुःस्थौ उद्बंधनात्तस्य मृतिं वदंति ॥ ३१ ॥ षष्ठेश्वरे भानुसुते सराहौ
केतौ मृगाद्भीतिमुदाहरंति ॥ जीवेन युक्ते गजभीतिमस्य जातस्य चंद्रेण युते श्वभीतिम् ॥ ३२ ॥
सूर्यान्विते तादृशभानुपुत्रे मृगात्सशृंगाच्छुनकात्सभौमे ॥ षष्ठस्थिते भानुसुतेऽपि चैवं विना
स्वतुंगस्वगृहं सखेटे ॥ ३३ ॥ सुखेशभाग्येशविलग्ननाथास्त्रिकोणगाः केंद्रगताश्च सर्वे ॥ भुक्तौ
यदा तत्परिपाककाले पित्रा सहैवानुमृतिं च मातुः ॥ ३४ ॥ रंध्रे शशांके फणिनाथयुक्ते हीने
त्वपस्मारयुतः समंदे ॥ तत्र स्थिते हीनबले शशांके पिशाचपीडा जलजा च पीडा ॥ ३५ ॥
भौमाहिमंदान्यतमेन युक्ते क्षीणे शशांके निधनस्थितेऽपि ॥ दुःस्थे त्वपस्मारभयान्मृतिः

स्यातिपशाचबाधा त्वथवा मृतिः स्यात् ॥ ३६ ॥ रंध्रे सराहौ यदि वा सकेतौ चातुर्थिकात्पीडनमाहुरस्य ॥ रंध्रेश्वरेणापि युते तथैव क्रूरादिषष्ट्यंशयुतेऽतिसत्यम् ॥ ३७ ॥ नीचस्थिते वासरनायके वा पष्ठाष्टमस्थे यदि पापदृष्टे ॥ राज्ञां प्रकोपान्मरणं पितुश्च तत्पीडया वित्तविनाशमेति ॥३८॥ किंचिदरिष्टयोगः ॥ लग्नाच्छुभे कर्मणि भूमिपुत्रे पापेक्षिते मातुलमृत्युमाहुः ॥ मंदेन युक्ते यदि पुत्रमृत्युं चन्द्रे हि तन्मातृमृर्तिं सपापे ॥ ३९ ॥ पितुर्मृतिर्वासरनायकेऽत्र न संशयः पापदृशा समेते ॥ पापद्वयेनापि युतौ विलग्ननिशाकरौ मृत्युमुपैति बालः ॥ ४० ॥ ग्रस्ते शशांके परिवेषयुक्ते पापेक्षिते वा मरणं च सद्यः ॥ त्वष्टार्यतोयेषु विलग्नचंद्रे जातः सवित्री सुतमातुलांश्च ॥ ४१ ॥ पापग्रहेणापि निहंति तांस्तु शुभैस्तु दृष्टे सहिते न दोषः ॥ लाभे शुभे वा यदि मंदभौमौ फणींद्रयुक्तौ पितुरस्त्यपायः ॥ ४२ ॥ पापेक्षिते भूमिसुते कलत्रे जातः स मृत्युं समुपैति रंध्रे ॥ सोत्थे धरासूनुयुते सपापे पापेक्षिते सोदरनाशमाहुः ॥ ४३ ॥ अस्ते शशांके यदि मातृमृत्युं पापान्विते पापदृशा समेते ॥ भानौ पितुर्मृत्युमुदाहरंति मंदारशुक्रैः सहिते सुतस्य ॥ ४४ ॥ तृतीयषष्ठस्थितखेचरेंद्रैः पापग्रहैरंत्यगतैश्च सौम्यैः ॥ शिशोर्मृतिं वा कुमुदात्मबंधौ चतुर्थरंध्रस्थितपापखेटैः ॥ ४५ ॥ लग्नेऽर्कचंद्रौ व्ययगास्तु पापाः शिशोर्मृतिं

शोभनदृष्ट्यभावे ॥ अस्ते रवौ चन्द्रयुते विलग्ने पापान्विते तत्सुतमृत्युमाहुः ॥ ४६ ॥ दिनेशचंद्रौ व्ययगौ तदानीमंधो भवेत्सौम्यदृशा विहीनौ ॥ युक्ते तयोरन्यतरेण रिःफे काणो भवेत्सौम्यदृशा विहीने ॥ ४७ ॥ दिनेशचंद्रौ व्ययगौ तदीशे लग्नस्थिते देहविनाशमाहुः ॥ सुरेश्वरे रंध्रगते व्यये वा पापान्विते पापदृशा समेते ॥४८॥ लग्नाधिपे पूर्णबले सुखेशभाग्येश्वरौ नाशगतौ विहीनौ ॥ जातस्य जन्मावसरे तदानीं पितुश्च मातुर्निधनं वदंति ॥४९॥ दुःस्थे तृतीयाधिपतौ सचंद्रे स्तन्यं परस्त्रीषु पिबेत्स बालः ॥ तातेशतत्कारकखेचरेंद्रौ दुःस्थौ तयोः पुत्रसुखं न दृष्टम् ॥ ५० ॥ केन्द्रत्रिकोणे यदि तौ विहंगौ वदेत्तयोः पुत्रसुखं सदृष्टम् ॥ पितुर्निशायां मरणं वदंति भाग्येशसूर्यार्कसुताः क्षतस्थाः ॥ ५१ ॥ षष्ठेश्वरेणापि युतास्तथैव चन्द्रेण हीनास्तु दिवा मृतिः स्यात् ॥ सुखास्थितैः खेचरनायकैर्वा मातुर्मृतिः स्यादयने तु तस्मिन् ॥ ५२ ॥ नोचेत्तदीशान्वितराशिकाले मातुर्मृतिः स्यादयने तु तस्मिन् ॥ द्वित्र्यादियोगादयनं हि तत्र व्यत्यासतो वा प्रवदंति संतः ॥ ५३ ॥ नाशे चरे वा पितृभावनाथे दूरस्थितस्तज्जनकोऽपि वाच्यः ॥ स्थिरोभयस्थे पितृभावनाथे समीपतस्तज्जनकः स्थितः स्यात् ॥५४॥ केंद्रे चरेऽर्के यदि वा शशांके सुतो दहेत्तातपितरौ न तत्र ॥ द्विदेहराशौ यदि तौ च केंद्रे तयोर्मृतिं वा दहनाद्विकालः ॥ ५५ ॥

बलेन युक्ते पितृभावनाथे शशांकदेहेशचतुर्थनाथाः ॥ बलेन हीना यदि तज्जनन्यां गाढां विपत्तिं समुदाहरंति ॥ ५६ ॥ रंध्रे तु पापबाहुल्ये गुह्यरोगं विनिर्दिशेत् ॥ शुभग्रहेण संदृष्टे न दोषस्तत्र निर्दिशेत् ॥ ५७ ॥ रंध्रे शुभेक्षिते तेन संयुते चेत्सुखं भवेत् ॥ स्थूलान्नं पापसंबंधे मृद्वन्नं शुभसंयुते ॥ ५८ ॥ रंध्रेशे पापसंयुक्ते पापदृष्टे तदंतरे ॥ पापक्षेत्रेऽथवा रंध्रे जातः परिभवान्वितः ॥ ५९ ॥ शुभग्रहाणां संबंधे रंध्रे परिभवो न हि ॥ चरे रंध्रे मृतिर्दूरे तदीशे चरराशिगे ॥ ६० ॥ शनौ वा चरराशिस्थे चरांशस्थे तथा भवेत् ॥ स्थिरे रंध्रे तदीशेऽपि स्थिरराशौ तदंशके ॥ ६१ ॥ शनौ वा स्थिरराश्यंशे स्वगृहे मरणं भवेत् ॥ रंध्रे द्विदेहराश्यादौ मार्गे मरणमादिशेत् ॥ ६२ ॥ इत्यष्टमभावविचारः ॥ अथ नवमभावविचारः ॥ शुभभवनाद्गुरुभाग्यपितृपौत्रोदयं तपःप्राप्तिम् ॥ ऊरुस्थानं स्वांतं सहभोक्तॄन् दानयोगमपि विद्यात् ॥ १ ॥ चिंतनीया गुरुस्वामी पितृभाग्यादिमातुलाः ॥ नवमे स्वामिसौम्याढ्ये शुभा एतेऽन्यथाशुभाः ॥ २ ॥ चंद्रे सपापे यदि धर्मराशौ भृगोः सुते वा गुरुदारगामी ॥ धर्माधिपे तादृशखेचरेण युते सपापे गुरुदारगामी ॥ ३ ॥ धर्माधिपस्थांशपतौ तथैव युक्ते तदा तादृशदारगामी ॥ वयोधिकस्त्रीगमनं वदंति चंद्रे सपापे यदि धर्मराशौ ॥ ४ ॥ क्षीणे निशीशे त्वथवा तदंशे शुक्रे

तथैवं गुरुदारगामी ॥ धर्माधिपे नीचगते तदंशे शुक्रेण युक्ते गुरुदारगामी ॥ ५ ॥ धर्मेश्वरे सौ-
म्ययुते तदंशे वैशेषिकांशे त्वथवा तदीशे ॥ क्रूरादिषष्ट्यंशविवर्जिते स्याज्जातस्तु धर्मे दृढबु-
द्धियुक्तः ॥ ६ ॥ गुरौ वा भृगुपुत्रे वा स्वोच्चमित्रांशके शुभे ॥ धर्माधिपे बलयुते धर्माध्यक्षो नरो
भवेत् ॥ ७ ॥ गुरुशुक्रबुधांशस्थे धर्मनाथे शुभेक्षिते ॥ शुभग्रहाणां मध्यस्थे धर्मभाक् स नरो
भवेत् ॥ ८ ॥ सौम्यान्विते धर्मगृहे तस्मिन्पापांशसंयुते ॥ क्रूरषष्ट्यंशके वापि दंभाद्धर्मपरिग्रहः
॥ ९ ॥ नाथकारकभावानामंशे शुभसमन्विते ॥ शुभांशे शुभसंदृष्टे सुचित्तो धर्मसंयुतः॥ १० ॥
धर्मे पापे पापभाक्स्यात्तदीशे पापसंयुते ॥ क्रूरषष्ट्यंशके वापि पापमध्यगतेऽथवा ॥ ११ ॥ राहुमं-
दयुते धर्मे क्रूरांशे गुलिकेक्षिते ॥ तदीशे क्रूरराश्यंशे त्वतिक्रूरादिकृद्भवेत् ॥ १२ ॥ पितृस्थानेश्वरे
सौम्ये कारके शुभसंयुते ॥ भावे वा शुभसंयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ १३ ॥ पारावतादिभाग-
स्थे नाथे वा कारकेऽपि वा ॥ स्वोच्चमित्रांशके वापि पितृसौख्यं विनिर्दिशेत् ॥ १४ ॥ सौम्यांत-
रस्थे तन्नाथे गुरुशुद्धयुतेक्षिते ॥ तेषामेकेन संयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ १५ ॥ गोपुराद्यं-
शसंयुक्ते कारके नाथवीक्षिते ॥ पापैरवीक्षिते युक्ते पितृसौख्यं विनिर्दिशेत् ॥ १६ ॥ पापदृष्टे
सपापे वा कारके भावनायके ॥ पापांतरगते वापि पितृदुःखं विनिर्दिशेत् ॥ १७ ॥ क्रूरनीचां-



॥४३॥

शकस्थे वा भावनाथे च कारके ॥ मंदमांद्यगुसंयुक्ते पितृदुःखं विनिर्दिशेत् ॥ १८ ॥ सौम्ये
तदीश्वरे वापि नीचशत्रुसमन्विते ॥ क्रूरषष्ट्यंशके वापि पितृदुःखं विनिर्दिशेत् ॥ १९ ॥
पितृस्थानेश्वरांशेशसंयुक्तनवभागपः ॥ क्रूरनीचारिभागस्थः पितृदुःखं विनिर्दिशेत् ॥ २० ॥
लग्नेशात् पितृभावेशे संपूर्णबलसंयुते ॥ कारके वा शुभैर्दृष्टे जातः पितृवशानुगः ॥ २१ ॥ पितु-
र्जन्माष्टमे जातस्तदीशे लग्नगेऽपि वा ॥ तत्रैव पितृकार्याणि कर्मशेषं समापयेत् ॥ २२ ॥
पितृकर्मगृहे जातः पितृतुल्यगुणान्वितः ॥ पितृजन्मतदीयर्क्षे जातः पितृधनाश्रितः ॥ २३ ॥
पितुः षष्ठाष्टमे जातः पित्रोः शत्रुर्भवेन्नरः ॥ पितुर्धर्मायवित्तेषु जातः पितृवशो भवेत् ॥ २४ ॥
पित्रष्टमे शनिक्षेत्रतृतीये यस्तु जायते ॥ स करोति पितुर्दीक्षां पुत्रपौत्रसमन्वितः ॥२५॥ पितुर्ज-
न्मांत्यभेशर्क्षत्रितये यस्तु जायते ॥ स करोति पितुर्दुःखं दूरदेशे गतो भवेत् ॥ २६ ॥ भाग्या-
धिपे विलग्नेशे दुश्चिक्ये धर्मगेऽपि वा ॥ बलवान् स्वोच्चभे वापि येषां ते श्रेष्ठमानवाः ॥ २७ ॥
त्रिकोणकेंद्रे यदि भाग्यनाथे सौम्येक्षिते सौम्ययुते बलाढ्ये ॥ पारावतांशादिगते शुभांशे
जातो धनाढ्यो बहुभाग्ययुक्तः ॥ २८ ॥ धनाधिपे लाभगते तदीशे भाग्यस्थिते तद्भवनाधि-
पेऽर्थे ॥ कर्माधिपेनापि युतेऽथ दृष्टे जातो महाभाग्ययुतो नरः स्यात् ॥ २९ ॥ तृतीयराशेर-

धिपेन युक्ते भाग्याधिपे सौम्यदृशा समेते ॥ शुभान्विते शोभनखेचरांशे भ्रातुर्धनाद्भाग्यमुपैति जातः ॥ ३० ॥ पुत्रेश्वरे वा यदि भाग्यराशौ भाग्याधिपेनात्र युतेऽपि दृष्टे ॥ तत्कारके वा यदि पुत्रभावे जातः सुताद्भाग्यमुपैति वित्तम् ॥ ३१ ॥ ज्ञातिस्थानाधिपे भाग्ये भाग्येशे ज्ञातिसंगते ॥ ज्ञातिकारकसंयुक्ते ज्ञातिभाग्यमुपैति सः ॥ ३२ ॥ कलत्रकारकादेवं तत्स्थाने-शाद्वदेत्तथा ॥ भाग्याधिपस्य शत्रुश्चेच्छत्रुराशिपतिस्तथा ॥ ३३ ॥ तदीशे भाग्यसंबंधे शत्रु-भाग्यमुपैति सः ॥ षष्ठाष्टमांत्यनाथेन युक्ते नाथेऽत्र तत्फलम् ॥ ३४ ॥ भाग्याधिपे विनाश-स्थेऽशत्रुनीचनिरीक्षिते ॥ क्रूरांशे नीचराश्यादौ भाग्यहीनो भवेन्नरः ॥ ३५ ॥ बहुपापसमायोगे भाग्ये हीने तदीश्वरे ॥ लग्नेशे बलहीने वा भाग्यहीनो भवेन्नरः ॥ ३६ ॥ गुरुशुक्रेक्षिते युक्ते भाग्ये तन्नायकेऽपि वा ॥ लग्नेशार्थपतौ धीरे भाग्यप्राप्तिः पुनर्भवेत् ॥ ३७ ॥ क्रूररा-श्यंशके भाग्यनाथे शुक्रेज्यवीक्षिते ॥ भाग्ये लग्नेशसंदृष्टे भाग्यनाशं करोति सः ॥३८॥ लग्नेशे भाग्यराशिस्थे भाग्येशे लग्नमाश्रिते ॥ लाभे भाग्येशसंयुक्ते पुनर्भाग्यं भवेत्खलु ॥ लाभभा-ग्येशसंयुक्तभाग्यपेऽर्थे पुनर्भवेत् ॥ ३९ ॥ कर्मेशे भाग्यराशिस्थे भाग्येशे बलसंयुते ॥ गुरुशुक्र-युते दृष्टे जपध्यानसमाधिमान् ॥ ४० ॥ कर्मेशयुक्तराश्यंशराशीशे बलसंयुते ॥ तदीशे भाग्यसं-

वंधे जपध्यानसमाधिमान् ॥ ४१ ॥ देवलोकांशकस्थे वा कर्मेशे भाग्यपेऽथवा ॥ पारावतांशके सौम्ये दृष्टे ब्रह्मणि निष्ठभाक् ॥ ४२ ॥ दानस्थानाधिपे स्वोच्चे शुभग्रहनिरीक्षिते ॥ तत्स्थाने शुभसंयुक्ते दानकृत्स नरो भवेत् ॥ ४३ ॥ पारावतादिभागस्थे दानेशे गुरुवीक्षिते ॥ लग्नेशे भृगुसंदृष्टे महादानकरो भवेत् ॥ ४४ ॥ दानाधिपेन संदृष्टे लग्ने तन्नायकेऽपि वा ॥ तस्मिन्केंद्र-त्रिकोणस्थे महादानकरो भवेत् ॥ ४५ ॥ सिंहासनांशके दाननाथे लग्नेशवीक्षिते ॥ कर्मेशेनापि संदृष्टे महादानकरो भवेत् ॥ ४६॥ भाग्ययोगे तु संप्राप्ते दानयोगे तथा भवेत् ॥ राजयोगेऽथवा प्राप्ते नेतरेषां तथा भवेत् ॥ ४७ ॥ इतरेषां तु संप्राप्ते दानयोगे कथं भवेत् ॥ भाग्ययोगे नरो जातो दानस्य तु सहायकृत् ॥ ४८ ॥ जातः पुरोहितो वाथ ब्रह्मवंशसमुद्भवः ॥ दानाध्यक्षोऽथ जातः स्याद्वर्णभेदविकल्पनात् ॥ ४९ ॥ चतुर्थे दानभावेशे कर्मेशे केंद्रमाश्रिते ॥ व्ययेशे गुरुसंदृष्टे महादानकरो भवेत् ॥ ५० ॥ भाग्येशेनापि संदृष्टे स्वोच्चस्थे सोमनंदने ॥ लाभेशे केंद्रभावस्थे महादानकरो भवेत् ॥ ५१ ॥ लग्नेशे लाभराशिस्थे कर्मेशे बलसंयुते ॥ दानाधिपेन संदृष्टे दानग्रहणमिष्यते ॥ ५२ ॥ सुतेशे भाग्यराशिस्थे कर्मभाग्यपसंयुते ॥ लग्नेशेनापि संदृष्टे दानप्राप्तिर्न संशयः ॥ ५३ ॥ भाग्येशे कर्मनाथेन दृष्टे केंद्रत्रिकोणगे ॥ परमोच्चांशके वापि दान-

प्राप्तिर्न संशयः ॥ ५४ ॥ गुरुस्थानेशसंयुक्तनवांशाधिपतौ यदा ॥ गुरुशुक्रेक्षिते वापि गुरुभक्ति-
युतो भवेत् ॥ ५५ ॥ गुरुस्थाने सौम्ययुते गुरुसंबंधसंयुते ॥ तदीशे मृदुभावस्थे गुरुभक्तियुतो
भवेत् ॥ ५६ ॥ अध्यायः सप्तमः प्रोक्त आयुर्धर्माधिवाचकः ॥ नानार्थसारसंयुक्तो व्यङ्कटेश्वरश-
र्मणा ॥ ५७ ॥ इति सर्वार्थचिंतामणौ सप्तमोऽध्यायः समाप्तः ॥ ७ ॥ छ ॥ छ ॥

अथ दशमभावविचारः ॥ दशमात् प्रवृत्तिमाज्ञां कीर्तिं वृष्टिं प्रवासपूर्तादीन् ॥ मानं कर्माजीवं
जानुस्थानं च निर्दिशेद्दासान् ॥ १ ॥ कर्माधिपे हीनबले सपापे कर्मादिवैकल्यमुशंति तज्ज्ञाः ॥
कर्मेशवागीशशशांकपुत्रा वीर्यान्विता यज्ञकरा भवंति ॥ २ ॥ शुभग्रहैर्दृष्टिसमन्वितास्ते वीर्या-
न्विता यज्ञविशेषमाहुः ॥ दुःस्थाः शशांकात्मजजीवशुक्राः पापेक्षिताः कर्मविनाशमाहुः ॥ ३ ॥
नाशस्थितास्तत्र तदंशनाथास्तद्युक्तराशेरधिपाश्च नाशम् ॥ राहौ च माने यदि वा दिनेशे भा-
गीरथीस्नानमुशंति तज्ज्ञाः ॥ ४ ॥ माने च मीने यदि वा ससौम्ये भौमान्विते वा भविता च
मुक्तिः ॥ जलर्क्षगे पूर्णशशांकजीवे मानस्थिते गांगजलादिपूतः ॥ ५ ॥ माने गुरौ शुक्रयुते च
केंद्रे स्वोच्चस्थिते तादृशतोयपूतः ॥ माने धने शुक्रयुते सजीवे केंद्रोच्चगे तादृशतोयपूतः ॥ ६ ॥
बुधे व्यये वा यदि वा तदीशे स्वोच्चान्विते तादृशपुण्यभाक् स्यात् ॥ चंद्रे तृतीये जलराशियुक्ते

सौम्यान्विते तादृशपुण्यभाक् स्यात् ॥ ७ ॥ शुभेश्वरे केंद्रयुते जलर्क्षे सौम्येक्षिते तादृशतोय-
पूतः ॥ बुधे सजीवे यदि वा सभौमे प्राकारकृन्मंडपगोपुरादीन् ॥८॥ मानस्थिते तद्गृहनाथयुक्ते
करोति जीर्णोद्धरणादि तत्र ॥९॥ करोति कूपादितटाकभूमिं कर्मेश्वरे गोपुरभागयुक्ते ॥ मृदंशके
वा शुभदृष्टियुक्तभाग्येश्वरेणापि निरीक्षिते वा ॥ १० ॥ चंद्रात्मजे कर्मगते तदीशे भाग्यस्थिते
पापविवर्जितेऽस्मिन् ॥ सौम्येक्षिते शोभनभावयुक्ते यज्ञस्य कर्ता स भवेत्तदानीम् ॥११॥ कर्मा-
धिपेऽस्मिन्यदि सोमपुत्रे स्वोच्चस्थिते वा यदि धर्मराशौ ॥ विवर्जितः स्याच्छिखिराहुपापैर्य-
ज्ञस्य कर्ता स भवेत्तदानीम् ॥ १२ ॥ कर्माधिपे स्वोच्चगते सपापे नीचांशगे नाशगतेऽपि
तस्मिन् ॥ विघ्नो भवत्येव मखस्य तस्य क्रूरादिषष्ट्यंशगतेऽपि चैवम् ॥ १३ ॥ तुंगस्थिते
सोमसुते तदीशे स्वोच्चान्विते सोमसुतेन दृष्टे ॥ शुभेक्षिते वा सबुधे स्वराशौ यज्ञस्य कर्त्ता
स भवेत्तदानीम् ॥ १४ ॥ आज्ञास्थानाधिपे सौम्ये शुभदृष्टियुतेऽपि वा ॥ शोभनांशगते वापि
चातस्त्वाज्ञाधिपो भवेत् ॥ १५ ॥ आज्ञास्थानगते सूर्ये भूमिपुत्रेऽथवा युते ॥ केंद्रान्विते
तदीशेऽपि क्रूरामाज्ञां करोति सः ॥१६॥ आज्ञाधिपे मंदयुते रंध्रनाथेन संयुते ॥ क्रूरांशे केंद्र-
राशौ वा क्रूरामाज्ञां करोति सः ॥ १७ ॥ मानाधिपे केंद्रयुते शुभयुक्तेक्षितेऽपि वा ॥

शुभषष्ट्यंशसंयुक्ते सौम्यामाज्ञां करोति सः ॥१८॥ राहुमांदियुते माने रंध्रे राहौ ध्वजेऽपि वा ॥ नीचस्थे धर्मभावेशे क्रूरामाज्ञां करोति सः ॥ १९ ॥ शशांके कर्किसंयुक्ते गुरुशुक्रनिरीक्षिते ॥ पारावतादिभागस्थे सत्कीर्तिसहितो भवेत् ॥ २० ॥ तदीशे शुभसंयुक्ते शुभमध्यगतेऽपि वा ॥ शुभग्रहाणामंशे वा सत्कीर्तिसहितो भवेत् ॥ २१ ॥ कीर्तिस्थानाधिपे सौम्ये स्वोच्चमित्रस्ववर्गगे ॥ सौम्यं षष्ट्यंशके वापि सत्कीर्तिसहितो भवेत् ॥ २२ ॥ तदीशे देवलोकस्थे सिंहांशे शुभनायके ॥ बलपूर्णे विलग्नेशे सत्कीर्तिसहितो भवेत् ॥ २३ ॥ पापग्रहाणां संबंधे माननाथे बलक्षये ॥ क्रूरषष्ट्यंशसंयुक्तेऽसत्कीर्तिसहितो भवेत् ॥ २४ ॥ अपकीर्तियुतो जातः कर्मस्थे च रवौ शनौ ॥ पापांशके पापदृष्टे पापमध्यगतेऽपि तत् ॥ २५॥ शुभग्रहाणां संबंधे माने तन्नायकेऽपि वा ॥ स्वोच्चे वा स्वगृहे वापि जातो मानी दृढव्रतः ॥ २६ ॥ इंगितज्ञोऽपि मानी स्यान्माने जीवेऽथवा शुभे ॥ तदीशे शुभसंबंधे शुभमध्यगतेऽपि वा ॥ २७॥ पापे माने पापदृष्टे तदीशे नीचराशिगे ॥ पापराश्यंशके वापि मानहीनो भवेन्नरः ॥ २८ ॥ मानाधिपे चरांशस्थे संचारसहितो भवेत् ॥ स्थिरांशस्थैर्यमुद्दिष्टं मृगयात्रा द्विदेहगे ॥ २९ ॥ षष्ठेशे कर्मराशिस्थे कर्मेशे मंदसंयुते ॥ केंद्रत्रिकोणगे वापि दासीदासान्विनिर्दिशेत् ॥३०॥ कर्माधिपस्थां-

शपतौ शनिसंबंधसंयुते ॥ षष्ठाधिपस्य संबंधे बहुदासान्विनिर्दिशेत् ॥ ३१ ॥ शुभग्रहेण संदृष्टे कर्मराशौ तदीश्वरे ॥ भानुपुत्रेण वा युक्ते बहुदासान्विनिर्दिशेत् ॥३२॥ कर्मनाथेन वा मुक्तिप्रश्न-पूर्तिं विनिर्दिशेत् ॥ तत्र पापसमायोगे जानुदौर्बल्यमादिशेत् ॥३३॥ अथ संन्यासयोगः ॥ ग्रहै-श्चतुर्भिः सहिते तदांशे त्रिकोणगैः केंद्रगतैस्तु मुक्तः ॥ चतुर्ग्रहैः केंद्रगतैः प्रव्रज्यामाप्नोति जातः कथितो मुनींद्रैः ॥ १ ॥ न वीक्षितश्चेदितरग्रहेंद्रैर्लग्नाधिपः पश्यति भानुपुत्रम् ॥ लग्नाधिपं वा यदि भानुपुत्रः संन्यासयोगो हि बलेन हीनः ॥ २॥ शनेर्दृकाणे कुमुदात्मबंधौ मंदेक्षिते तादृश-योगमाहुः ॥ मंदांशके भूमिसुतांशके वा मंदेक्षिते चंद्रयुते तथैव ॥ ३ ॥ संन्यासयोगाधिपतौ सराहौ क्रूरांशके वा गुलिकेन युक्ते ॥ संन्यासवैकल्यमुदाहरंति भंगो भवेत्तस्य शुभैर्विहीने ॥ ॥४॥ इति कर्मभावः ॥ अथ लाभभावः ॥ आयेनार्थावाप्तिं पादावपि वामकर्णचिंतां च ॥ जाता-वपि च ककुञ्जान् ज्येष्ठान्ब्रूयाद्धनान्याशाम् ॥ १ ॥ लाभेश्वरे केंद्रगते त्रिकोणे वा समन्विते ॥ लाभे वा पापसंयुक्ते धनलाभमुदीरयेत् ॥ २ ॥ धनाधिपे लाभगते लाभेशे धनमागते ॥ तावुभौ केंद्रगौ वापि धनलाभमुदीरयेत् ॥ ३ ॥ शुभमध्यगते लाभे तदीशे वा तथास्थिते ॥ पारावतादिभागस्थे धनलाभमुदीरयेत् ॥ ४ ॥ लाभेशयुक्तराशीशे शुभग्रहनिरीक्षिते ॥

शुभग्रहाणां मध्यस्थे धनलाभमुदीरयेत् ॥ ५ ॥ लाभनाथसमायुक्तनवांशाधिपतौ शुभे ॥ वित्ताधिपेन संदृष्टे धनलाभमुदीरयेत् ॥ ६ ॥ लाभाधिपसमायुक्तत्र्यंशभागपतौ शुभे ॥ कर्मेश्वरेण संदृष्टे धनलाभमुदीरयेत् ॥ ७ ॥ पापग्रहाणां संबंधे धनहानिं विनिर्दिशेत् ॥ लाभेश्वरोक्तदिग्भागाद्धनप्राप्तिं विनिर्दिशेत् ॥ ८ ॥ लाभराश्युक्तादिग्भागात् सर्वोत्तमबलादपि ॥ बलाबलवशेनैव द्रव्यलाभं विनिर्दिशेत् ॥ ९ ॥ लाभे पापे तद्गृहे वा अर्थहानिं विनिर्दिशेत् ॥ लाभेशे पापसंबंधे धननाशं विनिर्दिशेत् ॥ १० ॥ [1]कर्णस्थानेश्वरे सौम्ये शुभदृष्टिसमन्विते ॥ कर्णाधिपे बलवति कर्णाभरणमिष्यते ॥ ११ ॥ पापग्रहाणां संबंधे तन्नाशोऽत्र भविष्यति ॥ लाभेशात्सोदरेशाद्वा कर्णसौख्यं विनिर्दिशेत् ॥ १२ ॥ तदीशे शुभसंबंधे कर्णसौख्यं विनिर्दिशेत् ॥ तदीशे पापसंबंधे कर्णरोगं विनिर्दिशेत् ॥ १३ ॥ ब्रूयाज्ज्येष्ठांशलाभेन शुभपापवशादपि ॥ शुभग्रहाणां संबंधे दीर्घमायुर्विनिर्दिशेत् ॥ १४ ॥ पापान्विते पापदृष्टे तद्धानिं प्रवदंति हि ॥ लाभराशेश्च दिग्भागे धनलाभमुदीरयेत् ॥१५॥ तद्राशिनाथदिग्भागाद् द्रव्यप्राप्तिमुदीरयेत् ॥ लाभराशिवशादेवं चिंतयेन्मतिमान्नरः ॥ १६ ॥ इत्यायभावः ॥ अथ व्ययभावः ॥

१ कर्णस्थानेश्वरे तृतीयैकादशभावपतौ ।

व्ययभावनाद्व्ययमखिलं पतनं नरके च वैकल्यम् ॥ वामाक्षिचरणयुगुलं शयनस्थानं दिनिर्दिशेत्प्राज्ञः ॥ १ ॥ व्यये पापसमायुक्ते तदीशे पापखेचरे ॥ पापग्रहेण संदृष्टे पापमूलाद्धनव्ययः ॥ २ ॥ मंदमांद्यगुसंयुक्ते व्यये वा तद्गृहाधिपे ॥ क्रूरांशकसमायुक्ते पापमूलाद्धनव्ययः ॥ ३ ॥ व्ययाधिपसमायुक्तनवभागमतौ शुभे ॥ शुभांशे शुभमध्यस्थे धर्ममूलाद्धनव्ययः ॥४॥ गुरुशुक्रौ व्यये वापि बुधचंद्रौ शुभेक्षितौ ॥ पारावतादिभागस्थौ धर्ममूलाद्धनव्ययः ॥ ५ ॥ व्ययाधिपे त्रिकोणस्थे केंद्रे पापनिरीक्षिते ॥ क्रूरषष्ट्यंशके वापि पापमूलाद्धनव्ययः ॥ ६ ॥ पापेन कर्मनाथेन व्ययेशे दृष्टिसंयुते ॥ शत्रुनीचारिभागस्थे पापमूलाद्धनव्ययः ॥ ७ ॥ शुभेन कर्मनाथेन दृष्टे युक्ते व्ययेश्वरे ॥ स्वोच्चमित्रस्ववर्गस्थे धर्ममूलाद्धनव्ययः ॥ ८॥ व्ययेशे बलहीने वा शत्रुनाथयुतेक्षिते ॥ गुलिकादिसमायुक्ते शत्रुमूलाद्धनव्ययः ॥ ९ ॥ व्ययेशे दारनाथेन बलहीनेन तेन तु ॥ दृष्टे युते वा क्रूरांशे स्त्रीहेतोर्धननाशनम् ॥ १० ॥ तादृशे व्ययनाथेऽस्मिन् दृष्टे युक्तेऽथवा भवेत् ॥ तथाविधेन भौमेन भ्रातृमूलाद्धनक्षयः ॥ ११ ॥ पुत्रभावेश्वरेणापि बलहीनेन संयुते ॥ दृष्टे व्ययेशे क्रूरांशे पुत्रमूलाद्धनव्ययः ॥ १२ ॥ पितृस्थानेश्वरेणापि कारकेणापि वा युते ॥ व्ययेशे दृष्टिसंबंधे पितृमूलाद्धनव्ययः ॥ १३ ॥ एवं मातृपयोगेन युते

 

दृष्टे व्ययाधिपे ॥ क्रूरान्विते क्रूरभाग्ये मातृमूलाद्धनव्ययः ॥ १४ ॥ बलहीने तु रिःफेशे क्रूरराश्यंशकेऽपि वा ॥ नीचांशे नीचराशौ वा देहे वैकल्यमादिशेत् ॥ १५ ॥ बहुपापसमायोगे व्यये तद्भावनायके ॥ मंदमांद्यगुसंयुक्ते देहवैकल्यमादिशेत् ॥ १६ ॥ व्ययेशे पापराश्यंशे क्रूरांशे क्रूरसंयुते ॥ पापग्रहेण संदृष्टे नरके निपतिष्यति ॥ १७ ॥ नरके पतनं ब्रूयाद्राहुमांदियुते व्यये ॥ षष्ठाधिपेन संदृष्टे रंध्रनाथेन वा युते ॥ १८ ॥ व्ययेशयुक्तषष्टयंशे क्रूरभागादिसंज्ञके ॥ क्रूरग्रहेण संदृष्टे नरके पतनं वदेत् ॥ १९ ॥ चंदार्कयोर्यो बलवान् तद्युक्तत्र्यंशनायकः ॥ गुरुर्वा चंद्रशुक्रौ वा सूर्यभौमौ ज्ञसूर्यजौ ॥ २० ॥ दैविकं पितृलोकं तु तिर्यङ्नरकमेव च ॥ तेषां वदेत्क्रमेणैव तल्लोकः श्रेष्ठ उच्यते ॥ २१ ॥ उच्चस्थे श्रेष्ठलोकः स्यान्नीचे नीचत्वमाप्नुयात् ॥ समस्थिते समप्राप्तिरित्याहुश्च महर्षयः ॥ २२ ॥ शुभे स्वोच्चे व्यये वापि सौम्यखेचरवीक्षिते ॥ देवलोकादिभागस्थे स्वर्गप्राप्तिर्भविष्यति ॥ २३ ॥ देवेज्ये कर्मराशीशे व्ययराशिगतेऽपि वा ॥ शुभग्रहेण संदृष्टे स्वर्गप्राप्तिर्भविष्यति ॥ २४ ॥ नेत्रेशे[1] शुभसंयुक्ते शोभनांशसमन्विते ॥ शुभखेचरसंबंधे तन्नेत्रस्य शुभं वदेत् ॥ २५ ॥ अन्यथा चेद्वदेन्नाशं पादयोरपि तत्तथा ॥ 

१ नेत्रेशे द्वितीयद्वादशभावपतौ ।

तत्प्रपंचादिकं सर्वं धनभावे प्रदर्शितम् ॥ २६ ॥ गुरुशुक्रबुधास्तत्र वाहनं निर्दिशेद् बुधः ॥
वाहनोक्तादिकं सर्वं तदिहात्र विचिंतयेत् ॥ २७ ॥ शुभग्रहाणां संबंधे व्यये तद्भावनायके ॥
दोलां तु मंचं प्रवदेच्छयनादिसुखं तथा ॥ २८ ॥ व्ययेशे स्वोच्चराशिस्थे शुभवर्गसमन्विते ॥
शुभग्रहेण संदृष्टे पर्यंकशयनं वदेत् ॥ २९ ॥ विचित्रमंचशयनं व्ययेशे परमोच्चगे ॥ भाग्यना-
थेन वा दृष्टे मणिरत्नविभूषितम् ॥ ३० ॥ पापग्रहाणां संबंधे[1] व्यये तद्भावनायके ॥ क्रूरांशे
क्रूरसंदृष्टे शयनादिसुखं नहि ॥ ३१ ॥ व्ययेशः पापखेटोऽपि स्वोच्चमित्रस्ववर्गगः ॥ तस्य
नाथोऽपि तत्स्थाने शयनादिसुखं वदेत् ॥ ३२ ॥ नीचे व्यये वा लग्नेशे शत्रुनाथेन वीक्षिते ॥
मंदमांद्यगुसंयुक्ते शयनादिसुखं नहि ॥ ३३ ॥ पंचमे भृगुसंयुक्ते चंद्रेण सहितेऽथवा ॥ ताभ्यां
दृष्टेऽथवा पुत्रे स्त्रीदेवोपास्तिमादिशेत् ॥ ३४ ॥ पंचमे पुंग्रहयुते पुंदेवोपास्तिमादिशेत् ॥
पंचमे भानुसंबंधे सूर्यशंकरभाजनः ॥ ३५ ॥ चन्द्रे तथाविधे जाते यक्षिणीदेवता भवेत् ॥
स्कंदो वा भैरवो वापि सौम्यसंबंधवीक्षिते ॥ ३६ ॥ उपास्या शारदा सौम्ये विष्णुर्वा सात्विको
गुरौ ॥ चामुंडा पंचमे शुक्रसंबंधे तु विनिर्दिशेत् ॥ ३७ ॥ शनौ प्रेताशनी प्रोक्ता श्मशानानि-

१ अन्योन्यदृष्टौ एकतरदृष्टौ अन्योन्यस्थानास्थितावेकत्र स्थितौ वा संबन्धोऽवगन्तव्यः ।

लया भवेत् ॥ राहुकेतुयुते तत्र परपीडनदेवता ॥ ३८ ॥ उक्तेष्वेतेषु खेटेषु स्वोच्चमित्रांशकेषु च ॥ 
तदेव भजनं स्वार्थे परार्थे त्वन्यथा भवेत् ॥ ३९ ॥ सौम्येक्षितेषु सर्वेषु मृदंशादिगतेषु च ॥
तदेव सौम्यता वाच्या क्रूरांशे क्रूरता भवेत् ॥ ४० ॥ द्वित्र्यादिग्रहयोगेन तद्देवभजनं भवेत् ॥
लग्नाधिपस्य मंत्रेशे मित्रे तन्मित्रमादिशेत् ॥ ४१ ॥ शत्रुत्वे शत्रुभूतः स्यात्समत्वे समता भवेत् ४२ ॥
लग्नाद्द्वादशराशीनां फलं प्रोक्तं मयाधुना ॥ संगृह्य सारमखिलमध्यायस्त्वष्टमोऽभवत् ॥ ४३ ॥
इति सर्वार्थचिंतामणौ अष्टमोऽध्यायः ॥ ८ ॥ इति द्वादशभावविचारः ॥ ॥ छ ॥
अथ राजयोगाध्याय उच्यते ॥ षड्भिर्ग्रहैरुच्चसमन्वितैः स्याद्राजाधिराजो बहुदेशभर्ता ॥ उच्च-
स्थितैः पंचभिरत्र राजा शक्त्यन्वितो देवगुरौ विलग्ने ॥ १ ॥ कुंभे विलग्ने भृगुनंदने वा स्वोच्च-
स्थिते भूमिपतिश्चतुर्भिः ॥ उच्चस्थितैर्नीचवियुक्तभागैः क्रूरादिषष्ट्यंशविहीनभागैः ॥ २ ॥ लग्ने
वृषे तत्र युते शशांके षड्भिर्ग्रहैरुच्चगतैर्नृपः स्यात् ॥ कस्मिन् गृहे स्वोच्चयुते तु सर्वैः स्वक्षेत्रगै-
र्भूपतितुल्यजातः ॥ ३ ॥ मूलत्रिकोणांकितराशियुक्तैर्मित्रर्क्षगैर्वा यदि वक्रयुक्तैः ॥ कस्मिन् गृहे 
स्वोच्चयुतेऽत्र शेषैर्नीचांशहीनैर्नृपतुल्यजातः ॥ ४ ॥ जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः प्रचुर-
धनसमेतं मित्रयोगाच्च सिद्धम् ॥ विवसुविसुखमूढव्याधितावंधतप्ता वधदुरितसमेताः शत्रुनिम्न-

र्क्षगेषु ॥५॥ शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे ॥ अशून्येषु च केंद्रेषु कारकाख्यग्रहेषु च ॥६॥
हित्वार्कं सुनफानफादुरुधराः स्वांत्योभयस्थैर्ग्रहैः शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रु-
मोऽन्यैस्त्वसौ ॥ केंद्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते केचित् केंद्रनवांशकेष्वपि वदंत्यु-
क्तिप्रसिद्धा न ते ॥७॥ सौम्यैःस्मरारिनिधनेष्वधियोग इंदोस्तस्मिंश्चमूपसचिवक्षितिपालजन्म ॥
संपन्नसौख्यविभवा हतशत्रवश्च दीर्घायुषो विगतरोगभयाश्च जाताः ॥ ८॥ लग्ने चंद्रे गुरौ सौख्ये
कर्मस्थे भृगुनंदने ॥ स्वोच्चस्वर्क्षस्थिते मंदे नृपतुल्यो भवेन्नरः ॥ ९ ॥ दशमैकादशे रिःफलग्न-
वित्तं सहोत्थभे ॥ ग्रहास्तिष्ठंति चेत्सौम्या नृपतुल्यो भवेन्नरः ॥ १० ॥ केंद्रत्रिकोणगाः सौम्याः
पापाः षड्लाभसोदराः ॥ लग्नाधिपे बलवति नृपतुल्यो भवेन्नरः ॥ ११ ॥ दृश्यते युज्यते वापि
चंद्रजेन बृहस्पतिः ॥ शिरसा शासनं तस्य धारयंति नृपास्तथा ॥ १२ ॥ नीचस्थितो जन्मनि
यो ग्रहः स्यात्तद्राशिनाथोऽथ तदुच्चनाथः ॥ स चेद्विलग्नाद्यदि केंद्रवर्ती राजा भवेद्धार्मिकचक्र-
वर्ती ॥१३॥ निशाकरे केंद्रगते विलग्नं त्यक्त्वा त्रिकोणे यदि जीवदृष्टे ॥ शुक्रेण दृष्टे बलपूर्णयुक्ते
जातो नरो भूपतिभाग्यतुल्यः ॥ १४ ॥ नीचस्थिता जन्मनि ये ग्रहेंद्राः स्वोच्चांशगा राजसमान-
भाग्याः ॥ उच्चस्थिता चेदपि नीचभागा ग्रहा न कुर्वंति तथैव भाग्यम् ॥ १५ ॥ ग्रहा बलाढ्या

यदि पूर्वषट्के स्वोच्चस्थिताः पूर्वदले नृपः स्यात् ॥ तद्व्यत्ययं पश्चिमभागयुक्ता मिश्रस्थिताश्चे-
दुभयत्र भाग्यम् ॥ १६ ॥ त्रेधा विभज्यं तु वयःप्रमाणं खंडत्रयं तत्र वदंति संतः ॥ व्ययादिकं
प्राथमिके च खंडे शुभग्रहाः शोभनमत्र दद्युः ॥ १७ ॥ खंडे द्वितीये बहवश्च सौम्यास्तथैव
सौख्यं तु तृतीयखंडे ॥ खंडे तु यस्मिन्बहवश्च पापा नीचांशगा मूढसमन्वितास्तु ॥ १८ ॥
दुःखं भवेत्तत्र विशेषतस्तु राज्यात्पदभ्रंशमुदाहरंति ॥ एवं भवेच्छोभनखेचरेन्द्रैः खंडान्वितैः
शोभनकालमाहुः ॥ १९ ॥ लग्ने गुरौ बुधे केंद्रे भाग्यनाथेन वीक्षिते ॥ लग्नेशे वापि संदृष्टे नृप-
तुल्यो भवेन्नरः ॥ २० ॥ सप्तमे जीवसंयुक्ते त्रिकोणे वा समन्विते ॥ लग्नाधिपेन संदृष्टे नृपतु-
ल्यो भवेन्नरः ॥ २१ ॥ केंद्रे शनौ त्रिकोणे वा स्वोच्चमूलत्रिकोणगे ॥ राज्याधिपेन संदृष्टे नृप-
मानसमन्वितः ॥ २२ ॥ कर्मेशे रंध्रभावस्थे स्वोच्चमित्रांशसंयुते ॥ पारावतांशके वापि राजरा-
जो भवेन्नरः ॥ २३ ॥ नीचे गुरौ विलग्नस्थे रंध्रस्थे वाथ धर्मपे ॥ तथाविधांशसंयुक्ते राजराजो
भवेन्नरः ॥ २४ ॥ गुरौ व्यये शनौ लाभे रवौ वा विक्रमाधिपे ॥ गुरौ व्यये विलग्नेशे राजराजो ॥५०॥
भवेन्नरः ॥ २५ ॥ पंचमे जीवसंयुक्ते चंद्रे केंद्रे बृहस्पतौ ॥ स्थिरलग्ने तदीशे तु राज्यस्थे नृपति-
र्भवेत् ॥ २६ ॥ पूर्वषट्के ग्रहाः सर्वे यस्य तिष्ठंति जन्मनि ॥ भाग्याधिपे धनस्थे वा सचंद्रे

नृपतिर्भवेत् ॥ २७ ॥ चंद्राधिष्ठितराश्यंशनाथे केंद्रायकोणगे ॥ बुधात्केंद्रगते वापि राजराजो भवेन्नरः ॥ २८ ॥ निशाकरः सभौमस्तु वित्ते वा विक्रमेऽपि वा ॥ पंचमे राहुसंयुक्ते राजराजो भवेन्नरः ॥ २९ ॥ भाग्याधिपसमायुक्तनवांशाधिपतौ सुखे ॥ पुत्रस्थानगते वापि नृपश्रेष्ठो भवेन्नरः ॥ ३० ॥ क्रूरे सकर्मभावेशे ग्रहास्तिष्ठंति चेत् क्रमात् ॥ लग्नादिपूर्तषट्केऽस्मिन् राजराजो भवेन्नरः ॥ ३१ ॥ लग्ने चरे तदीशेऽपि चरराश्यंशकान्विते ॥ भाग्येशे चरराशिस्थेऽपि यायादन्यदेशगः ॥ ३२ ॥ राजयोगादिसंजाते तथा वाच्योऽन्यथा नहि ॥ उत्तमांशगते चंद्रे गुरौ नीचांशवर्जिते ॥ ३३ ॥ शुभषष्ट्यंशके सूर्ये नृपतुल्यो भवेन्नरः ॥ त्रयो वा द्वौ खगौ वापि चत्वारो नीचसंयुताः ॥ शुभषष्ट्यंशसंयुक्ताः स्वोच्चांशे वा धरापतिः ॥ ३४ ॥ नीचस्थितांशनाथस्तु खेटः केंद्रत्रिकोणगः ॥ चरलग्ने तदीशे तु चरांशादौ नृपो भवेत् ॥ ३५ ॥ माने राहौ भवे मंदे भाग्यनाथेन वीक्षिते ॥ लग्नेशे नीचखेटेन युते नृपसमो भवेत् ॥ ३६ ॥ अंशतो भावतो वापि स्वोच्चमूलत्रिकोणतः ॥ राजयोगास्तु निर्दिष्टास्तेषां योगे बहुत्वता ॥ ३७ ॥ अथ जातकभंगः ॥ जीवे सकेतौ यदि वा सराहौ चंडालता पापनिरीक्षिते चेत् ॥ नीचांशगे नीचसमन्विते वा जीवे द्विजश्चेदपि तादृशः स्यात् ॥ १ ॥ ध्वजाहिमंदैः सहितेंद्रपूज्ये शुक्रेक्षिते वा

शशिसूनुदृष्टे ॥ शूद्रोऽपि चेद्विप्रसमानमेति विद्यां च सर्वामधिगम्यजातः ॥ २ ॥ मेषे शशांके
रविसूनुदृष्टे भिक्षाशनी भूमिसुतेन दृष्टे ॥ निःश्रीर्विलग्नस्य निशाकरस्य लुब्धो दिनेशात्मजदृ-
ष्टियोगात् ॥ शुभग्रहाणामवलोकनेन हीनाद्भवेत्तत्र समन्विताद्वा ॥ ३ ॥ तत्कालहोराधिपतौ
धराजे केंद्रे शनौ चेद्यदि वा विलग्ने ॥ शुभग्रहाणामवलोकहीने दासस्तु भिक्षाशनदेहशी-
लः ॥ ४ ॥ पापमध्यगते चंद्रे सप्तमे मंदसंयुते ॥ श्वासक्षयप्लीहगुल्मविद्रधिं भजते नरः ॥ ५ ॥
वेशौ समंदे दशमे सचंद्रे वैकल्यमंगे क्षितिजे कलत्रे ॥ परस्परक्षेत्रनवांशयुक्तौ शशांकसूर्यौ
तनुशोषणं स्यात् ॥ ६ ॥ दिनेशचंद्रौ रविराशियुक्तौ चंद्रर्क्षगौ वा यदि शोषणं तत् ॥ रंध्रारि-
वित्तांत्यगता ग्रहेंद्रा दिनेशचंद्रारयमाः क्रमेण ॥ ७ ॥ कुर्वंति जातं नयनेन हीनं तद्धातुकोपा-
द्बलसंयुतस्य ॥ लग्ने गुरौ भूमिसुते कलत्रे उन्मादभाक् तत्र नरो हि जातः ॥ ८ ॥ उन्मादयुग्भ्रं-
शयुतो विलग्ने शनौ कलत्रे सकुजे त्रिकोणे ॥ लग्ने शनौ रिःफगते दिनेशे चंद्रे त्रिकोणे यदि
वा धराजे ॥ ९ ॥ उन्मादबुद्धिः स जडोऽथवा स्याज्जातो हि चेच्चंचलबुद्धियुक्तः ॥ लग्ने त्रिकोणे
दिननाथचंद्रौ शौर्ये गुरौ केंद्रसमान्विते वा ॥ १० ॥ उन्मादबुद्धिः स भवेत्तदानीं शन्यारवारो
यदि जन्मकाले ॥ केंद्रस्थितौ सौम्यनिशाकरौ वा सौम्यांशहीनौ भ्रमसंयुतः स्यात् ॥ ११ ॥

केंद्रस्थिता मंदनिशाकरार्का जडो भवेदन्यवसूपभोक्ता ॥ भाग्येश्वरे रिःफगते तदीशे वित्त-
स्थिते भ्रातृगतैश्च पापैः ॥ १२ ॥ केमद्रुमेऽस्मिन्स भवेत्कुभोजी दुष्कर्मयुक्तोऽन्यकलत्रगामी ॥
नीचे विलग्नाधिपतौ तदंशे षष्ठाष्टमस्थैर्यदि पापखेटैः ॥ १३ ॥ मांदौ विलग्ने कुलनाशकः
स्यादल्पायुराहुः शुभदृष्टिहीनैः ॥ सर्वग्रहैर्नीचसपत्नभागैः कर्मात्यगैर्भिक्षुक एव जातः ॥ १४ ॥
होरेश्वरे रिःफगते तु माने क्रूरान्विते भौमयुते शशांके ॥ जातोऽभिशस्तः परदेशवासी भिक्षा-
शनी दुःखितदेहभाक् स्यात् ॥ १५ ॥ रंध्रस्थिताः पापखगाश्च सर्वे निशाकराच्छौ यदि केंद्र-
युक्तौ ॥ योगे गदाख्ये स भवेत्तदानीं जातोऽप्यपस्मारयुतः सुतस्थः ॥ १६ ॥ समन्विताः
सौम्यशशांकशुक्राः केंद्रस्थिता भोगिनाथे विलग्ने ॥ चंडालयोगः स भवेत्तदानीं जातो निजा-
चारसुकर्महीनः ॥ १७ ॥ षष्ठाष्टमे भानुसुते सभौमे जातोऽप्यपस्मारयुतो नरः स्यात् ॥
पापग्रहाः षड्व्ययरंध्रभेषु जीवे परिध्यन्वितकेंद्रहीने ॥ १८ ॥ जातः परिभ्रंशसमन्वितः
स्याच्छुभैर्न युक्ता न च दृष्टिहीनाः ॥ माने स्थिता वा यदि वित्तराशौ पापास्तथा देवगुरौ च
हीने ॥ १९ ॥ भाग्येश्वरे चांत्यगते सपापे जन्मोदयेशौ रविगौ कुलघ्नः ॥ विनष्टपुत्रार्थकलत्र-
भाक् स्यात् शुभैर्न युक्तौ यदि वीक्षितौ वा ॥ २० ॥ शुभाशुभैः केंद्रगतैः शशांको लग्नेश्वरेणापि

निरीक्षितश्चेत् ॥ सौरांशके वा यदि संयुतश्चेज्जातः कुलध्वंसकरो विदारः ॥ २१ ॥ गृहात्परि-
भ्रष्टविदारपुत्रो गुणेन हीनो यदि वा जडोऽसौ ॥ केंद्रे शनौ लग्नगते शशांके जीवे व्यये भिक्षुक
एव जातः ॥ २२ ॥ चंद्रात्सुतेऽर्थे यदि लग्ननाथे रंध्रस्थितैः सौम्यखगेतरैर्वा ॥ मानस्थिते
रात्रिकरे तदानीं जातस्तु जीवत्यतिहेयवृत्त्या ॥ २३ ॥ लग्नाधिपान्मृत्युषष्ठव्ययस्थैः पापैर्जातो
जन्मभूमेर्हि भ्रष्टः ॥ नीचारिभांशे यदि देवपूज्ये तदंशके वासरनाथपुत्रे ॥ २४ ॥ जातोऽति-
दुःखी सुतदारहीनः कृच्छ्रादसौ जीवति भाग्यहीनः ॥ उच्चस्थिते वासरनायके तु नीचांशयुक्ते
यदि राजपुत्रः ॥ २५ ॥ प्राप्नोऽतिनीचत्वमिनोदये स्यात्पापेक्षिते वा यदि निश्चितार्थः ॥
तुलायां दशमे भागे स्थितः पंकजबोधनः ॥ सहस्रराजयोगानां फलं नीचत्वमाप्नुयात् ॥ २६ ॥
भृगोः पुत्रोऽपि नीचस्थो राजयोगविनाशदः ॥ उल्कापाताद्यप्रकाशे ग्रहे जातोऽपि भंगगे ॥२७॥
नीचे भृगौ मंदनवांशके वा व्यये स्थिते चंद्ररवी कलत्रे ॥ निरीक्षितौ भानुसुतेन चात्र जातः
परप्रेष्यमुपैति नित्यम् ॥ २८ ॥ क्षीणे शशांके क्षितिजे कलत्रे लग्ने शनौ भ्रंशदशान्वितः
स्यात ॥ लग्ने शनौ कर्मगते शशांके शुक्रेक्षिते वा यदि बंधभोक्ता ॥२९॥ चंद्रे व्यये वा यदि वा
दिनेशे मंदे त्रिकोणे मदरंध्रभेऽर्के ॥ मंदाग्निरोगी स भवेत्तदानीं नीचारिशत्र्वंशगतास्तथैव॥३०॥

सुतांबुगौ पापखगौ विशेषाच्चंद्रेऽष्टरिःफारिगतेंऽधता स्यात् ॥ शुभग्रहाणामवलोकहीने त्वंधो
भवत्येव शुभैर्न दोषः ॥ ३१ ॥ माने शशांके सबुधे कलत्रे शनौ द्वितीये विकलांगमेति ॥
जातिच्युतिर्नीचसपत्नभागसमन्वितास्तेऽपि विनिश्चितार्थः ॥ ३२ ॥ निशाकरे कार्मुकमध्य-
भागमृगांशकर्की वृषभागयुक्ते ॥ मंदारयुक्ते तदवेक्षणे वा कुष्ठी भवेत्सौम्यदृशा विहीने
॥ ३३ ॥ कुलीरकुंभालिनवांशयुक्ते चंद्रे समांदौ यदि गुल्मरोगी ॥ चंद्रे सुखे तद्भवनां-
शयुक्ते पापान्विते स्याद्द्विजकंठरोगी ॥ ३४ ॥ चंद्रे सपापे फणिनाथयुक्ते रिःफे शुभे रंध्रगतेऽ-
थवापि ॥ उन्मादभाक् तत्र सरोषता च जातस्तु नित्यं कलहप्रियः स्यात् ॥ ३५ ॥ चंद्रे सगो-
कर्कटराशियुक्ते पापान्विते तद्विपरीतयुक्ते ॥ उन्मंडलस्थौ शशिभौमसंज्ञौ पापान्वितौ सौम्य-
दृशा विहीनौ ॥ ३६ ॥ हृच्छूलभाक् जातनरस्तु नित्यं तथैव तौ सप्तमराशियुक्तौ ॥
केंद्रे शनौ जन्मनि येन दृष्टे जीवे शशांके यदि वा दिनेशे ॥ विलग्नगे स्याद्यदि
भाग्यहीनः प्राप्तार्थचोरो मुनयो वदंति ॥ ३७ ॥ व्यये शुभेशे यदि पापखेटे केंद्रस्थिते ज्ञान-
धनादिहीनः ॥ परान्नभुक् दुःखितदेहभाक् स्याच्छुभेन दृष्टे कलहप्रियो वा ॥ ३८ ॥ केंद्रे
गुरौ तज्जनकेन काले न कर्मवेदोक्तमथास्ति नास्ति ॥ पितुः सुतो वा यदि वा न कुर्यादूर्ध्वं तु

तत्कर्म शुभैर्विहीने ॥ ३९ ॥ केंद्रे शशांके क्षितिसूनुयुक्ते रंध्रस्थितो वा यदि कश्चिदस्ति ॥ अ० ९
संवाहनाद्भीतिमुशंति तज्ज्ञाः सुखस्थिते क्षीणनिशाकरे तु ॥ ४० ॥ रवौ सुखे पापदृशा समेते
देहोष्णमाहुः सुखमाहुरार्याः ॥ रवेः शशांके नवमस्थिते तु जले मृतिस्तस्य पितुश्च वाच्या
॥४१॥ पापेक्षितौ चंद्ररवी झषस्थौ जले मृतिस्तस्य पितुश्च वाच्या ॥ कुजाहियुक्ते दिवसेशपुत्रे
सुखे शनौ वा भयमस्य वाच्यम् ॥ ४२ ॥ नीचे भृगौ धर्मगते सपापे द्विजप्रहर्ता यदि पापदृष्टे ॥
विकर्णतामेति फणींद्रयुक्ते माने तदा भौमयुते शिशुघ्नः ॥ ४३ ॥ नीचे गुरौ वासरनायके वा
केंद्रस्थिते पापयुते शिशुघ्नः ॥ केंद्रे सपापे शुभदृष्टियुक्ते रंध्रे भृगौ गोमृगजातिहंता ॥ ४४ ॥
शशांकसौम्यौ दशमस्थितौ वा पापेक्षितौ पापसमागमौ वा ॥ नीचांशगौ सौम्यदृशा विहीनौ
जातस्तु नित्यं खलु पक्षिहंता ॥ ४५ ॥ रंध्रे गुरौ नीचसमन्विते वा गलांतमृत्युं प्रवदंति तज्ज्ञाः ॥
चंद्रे व्यये वा मदभे सशुक्रे जातस्य वामं नयनं हिनस्ति ॥ ४६ ॥ रंध्रे त्रिकोणे दिवसाधिनाथे
जातस्य गेहे शिथिलीभयं स्यात् ॥ तस्मिञ्छनौ वा यदि वा सकेतौ पतेत्तदानीं कृकलासजातिः ॥५३॥
॥ ४७ ॥ कौल्यादिपातित्यमुशंति तज्ज्ञास्तत्रैव राहौ तु कुजे तु कौर्मम् ॥ तत्र स्थिते सोमसुते
च दंशं शुक्रे तु निद्रापतनं स्त्रियाश्च ॥ ४८ ॥ तत्रैव मंदे पतनं नराणां बलाबलं चिंत्य वदेत्त-

दानीम् ॥ वंध्यास्त्रिया संगमनं रवौ स्यान्मदे शशांके भवने समानम् ॥ रजस्वलासंगमनं
कुजे तु वंध्यांगनासंगमनं च वाच्यम् ॥ ४९ ॥ बुधे तु वेश्यागमनं मदस्थे हीनांगनासंगमनं
वणिग्जाम् ॥ मदे गुरौ ब्राह्मणभार्यया वा भृगौ तु गर्भान्वितभामिनी वा ॥ ५० ॥ सपुष्पिणी
जातिविहीनता वा गम्या भवेत्तेन शनिध्वजाद्यैः ॥ राहौ मदे गर्भिणिसंगमः स्यात्कृष्णा
च कुब्जा शनिना वदंति ॥ ५१ ॥ सुखस्थितैरीदृशसंगमस्तु वाच्यस्तदा व्योमचरैर्विशेषात् ॥
सूर्यादिभिर्व्योमचरैः सुखस्थैर्वाच्यस्तयोः संगमनस्य शालाम् ॥ ५२ ॥ वनं गृहं शून्यगृहं
विहारस्थानं तु देवालयतोयभूमिः ॥ हरीशजस्थानमतीव दुर्गस्थानं तु वा निर्जिततोयभूमिः ॥
॥ ५३ ॥ केंद्रे चतुष्के यदि पापयुक्ते जातः पशूनां मिथुनं समेति ॥ केंद्रत्रिके पापयुते यदि
स्यात्पश्वादिवन्मैथुनमेति जातः ॥५४॥ कृशस्तना भूमिसुते मदस्थे लंबस्तना मंदफणींद्रकेतौ ॥
काठिन्यतश्चोर्ध्वकुचा रवौ स्याच्छेषग्रहैरुत्तमकोमलस्तनी ॥ ५५ ॥ चंद्रे कृशांगे परिजीर्णगेहं
तस्मिन्बलिष्ठे सुदृढं नवीनम् ॥ दुःस्थे यदि स्याच्छनिराहुकेतौ दाहेन तप्तं नियमेन वाच्यम् ॥
धनायपौ लग्नपतेस्तु मित्रे धनं तदीयं द्विजदेवतार्थम् ॥५६॥ इति चिंतामणौ प्रोक्तं राजयोगादिनि-
र्णयम् ॥ जातभंगादिकं चैव व्यङ्कटेशेन धीमता ॥५७॥ इति सर्वार्थचिंतामणौ नवमोऽध्यायः ॥९॥

केचिद्योगं प्रशंसंति दशां केचिद्वदंति हि ॥ तद्विना चायुषं ज्ञातुं न शक्यं तु मनीषिभिः ॥ १ ॥
त्रिविधाश्चायुषां योगाः स्वल्पायुर्मध्यमोत्तमाः ॥ द्वात्रिंशत्पूर्वमल्पं स्यात्तदूर्ध्वं मध्यमं भवेत् ॥२॥
आसप्ततेस्तदूर्ध्वं तु दीर्घायुरिति संमतम् ॥ उत्तमायुः शतादूर्ध्वमिह शंसंति तद्विदः ॥ ३ ॥
आद्वादशाब्दाज्जंतूनामायुर्ज्ञातुं न शक्यते ॥ जपहोमचिकित्साद्यैर्बालरक्षां तु कारयेत् ॥ ४ ॥
पित्रोर्दोषैर्मृताः केचित्केचिद्बालग्रहैरपि ॥ अपरे रिष्टयोगाच्च त्रिविधा बालमृत्यवः ॥ ५ ॥
जन्मतः प्रबलेनैव बालानां पुष्टिवर्धनम् ॥ कथयेदेव शेषं तु तत्तद्योगानुरूपतः ॥ ६ ॥
अल्पायुर्लग्नपे भानोः शत्रौ मध्यं तु मध्यमे ॥ मित्रे लग्नेश्वरे तस्य दीर्घमायुरुदाहृतम् ॥ ७॥
अल्पायुर्योगजातस्य विपद्वा ये मृतिं वदेत् ॥ जातस्य मध्यमे योगे प्रत्यरेस्तु मृतिर्भवेत् ॥ ८ ॥
दीर्घायुर्योगजातानां वधभे तु मृतिर्भवेत् ॥ त्रिषु योगेषु सर्वेषु प्रत्येकं त्रिविधं भवेत् ॥ ९ ॥
चरस्थिरेति सूत्रेण दीर्घमध्याल्पकायुषः ॥ तयोरन्यतमं ज्ञात्वा चायुर्ज्ञानं प्रचक्षते ॥ १० ॥
अल्पायुरल्पमध्यं तु पूर्णायुस्त्रिविधं स्मृतम् ॥ मध्यमादल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् ॥ ११ ॥
दीर्घायुषोऽल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् ॥ एवं नवविधः प्रोक्तश्चायुषां तु विनिर्णयः ॥ १२ ॥
पंचम्यारदशा मृत्युं दद्यात्षष्ठी गुरोर्दशा ॥ शनेश्चतुर्थी मृत्युः स्याद्दशा राहोश्च सप्तमी ॥ १३ ॥

विपत्पाकदशा कष्टा प्रत्यरीशदशा तथा ॥ वधभेशदशा कष्टा पापा स्यादशुभेक्षिता ॥ १४ ॥
नीचारातिविमूढस्य विपत्प्रत्यरिनैधनाः ॥ दशा दद्युर्मृतिं तस्य पापैर्युक्ता विशेषतः ॥ १५ ॥
राशिसंधिषु ये जातास्ते बाला मृतजीवनाः ॥ पापदृष्टा युता वापि निःसंशयमृतिः स्मृता ॥ १६ ॥
गंडांतेषूद्भवो मर्त्यः पितृमातृबलात्ततः ॥ यदि जीवेत्स्वर्गपालो गजवाजिसमन्वितः ॥ १७ ॥
तृतीयगौ भानुनिशाकरौ वा क्रूरर्क्षगौ क्रूरनिरीक्षितौ वा ॥ व्याधिं नरस्यापि वदंति तज्ज्ञास्त्रि-
वर्षमात्रं त्वतिदुर्लभं तत् ॥ १८ ॥ चंद्रात् स्मरे वासरनाथभौमौ कुजोदये वा मरणं दशाहात् ॥
उदयद्रेष्काणजामित्रे यस्य स्याद्दारुणो ग्रहः ॥ १९ ॥ क्षीणचंद्रे विलग्नस्थे सद्यो हरति जीवि-
तम् ॥ आपोक्लिमे स्थिताः सर्वे ग्रहा बलविवर्जिताः ॥ षण्मासं वा द्विमासं वा तस्यायुः समुदा-
हृतम् ॥ २० ॥ विलग्नाधिपतिर्नीचे निधने वार्कसंयुते ॥ कृच्छ्रेण जीवनं विद्यान्मृतप्रायो भवि-
ष्यति ॥ २१ ॥ केतोरुदयः पूर्वे पश्चादुल्काग्निपवननिर्घाताः ॥ रौद्रे सति मुहूर्ते प्राणैः संत्य-
ज्यते जंतुः ॥ २२ ॥ ग्रहणपरिवेषकाले जातः पापान्विते विलग्नस्थे ॥ लग्नेशे बलहीने जीवति
पक्षत्रयं त्रिमासं वा ॥ २३ ॥ अंशाधिपतिर्जन्मपतिर्लग्नपतिश्चास्तमुपगता यस्य ॥ जन्मा-
वसानमरणं तस्य भवेत्कतिपयाहेन ॥ २४ ॥ संधिचतुष्टयकाले जातो मृत्युं समादिशेत्तज्ज्ञः ॥

पापयुते वा दृष्टे शीघ्रं सौम्यैरदृष्टयुते ॥ २५ ॥ राहौ केंद्रे पापयुक्तेक्षिते वा क्षिप्रं नाशं
याति सौम्यैरदृष्टे ॥ पापः केंद्रे वार्किलग्ने त्रिकोणे सौम्यैः षष्ठे चाष्टमेऽन्त्ये च बालः ॥ २६ ॥
जातः क्षीणे शीतगौ लग्नसंस्थे पापैर्दृष्टे नाशमाशु प्रयाति ॥ उच्चक्षेत्रं मेषराशिं च हित्वा
राहुर्युक्तस्तेष्वपि प्राणनाशः ॥ २७ ॥ लग्नात् सांत्यौ पापयुक्तौ यदि स्तः सप्तात्स्वांत्यौ वा
विनश्येत्क्षणेन ॥ लग्नाद्बालश्चाष्टमे पापचारैः सोमे क्षीणे त्वष्टमाब्दं च जीवेत् ॥ २८ ॥ केंद्रश्चं-
द्रात् पापयुक्तैरसौम्यैः स्वर्गं याति प्रोच्यते वत्सरेण ॥ जन्माधीशे लग्नगे क्रूरयुक्ते पश्यत्यार्कि-
श्चाष्टमे जीववर्जे ॥ २९ ॥ षष्ठे वर्षे द्वादशे वाष्टमे वा संधौ राशेर्जातको मृत्युमेति ॥ षष्ठेऽष्टमे
वा हिमगौ च यस्य क्षीणे व्यये पापयुतेऽथवापि ॥ ३० ॥ सौम्यैर्दृष्टे त्वष्टमाब्दं च जीवेत्पापैः
सौम्यैर्मिश्रितैस्तद्दलाख्यम् ॥ जीवे विलग्ने मिथुने तुलायां शुक्रेण युक्ते शशिसूनुनापि ॥ ३१ ॥
पापैर्दृष्टे मृत्युराशिस्थितैर्वा जीवेद्वर्षं चाष्टमं चैव बालः ॥ लग्ने क्षीणे शशिनि निधनं रंध्रकेंद्रेषु
पापैः पापांतस्थे निधनहिबुकद्यूनयुक्ते च चंद्रे ॥ ३२ ॥ एवं लग्ने भवति मदनच्छिद्रसंस्थैश्च ॥९९॥
पापैर्मात्रा सार्धं यदि न च शुभैर्वीक्षितैः शक्तिमद्भिः ॥ ३३ ॥ राहुग्रस्ते शीतरश्मौ विलग्ने
क्रूरैर्युक्ते चाष्टमे भूमिपुत्रे ॥ मात्रा सार्धं चंद्रवद्भास्करेऽपि शस्त्रैः पातेनाशु मृत्युं प्रयाति ॥३४॥

अस्तं गते दिनपतौ रविजे विलग्ने भौमेऽथवा निधनगे व्रजति तृतीयात् ॥ एवं स्थितेऽपि
हिमगावशुभैश्च दृष्टे राहुग्रहे च निधने भवतीह चाष्टौ ॥ ३५ ॥ बृहस्पतिर्भौमगृहेऽष्टमस्थः
सूर्येंदुभौमार्कजदृष्टमूर्तिः ॥ अब्दैस्त्रिभिर्भार्गवदृष्टिहीनो लोकांतरं प्रापयति प्रसूतम् ॥ ३६ ॥
वक्री शनिर्भौमगृहं प्रपन्नश्छिद्रे च षष्ठे च चतुष्टये वा ॥ कुजेन संप्राप्तबलेन दृष्टो वर्षद्वयं
जीवयति प्रजातम् ॥ ३७ ॥ सौरो स्मरस्थे यदि वा विलग्ने जन्मस्थलग्ने शशिवृश्चिके वा ॥
सौम्येषु केंद्रोपगतेषु सद्यो जातस्य मृत्युर्यवनोपदिष्टः ॥ ३८ ॥ नीचस्थे देवपूज्ये तु भौमक्षेत्र-
गतेऽथवा ॥ संधित्रयेऽपि जातस्तु मासान्मृत्युं प्रयच्छति ॥ ३९ ॥ नक्षत्रसंधौ तिथिराशिसंधौ
एकत्रता तत्प्रसवस्त्रिधा स्यात् ॥ जातस्य मृत्युं समुपैति सद्यः शुक्रेऽह्नि जीवेदिति नंदिकोक्तम्
॥ ४० ॥ षष्ठ्यां जातश्चार्कलग्ने कुजे वा गंडांते वा मृत्युयोगेऽथवापि ॥ भौमो हंति प्राणिनां
तत्क्षणेन जीवेक्षिते चेन्न भवेत् प्रजातः ॥ ४१ ॥ भौमोदये तद्दिवसे कृशेंदौ होरास्वामी लग्नकें-
द्राद्बहिष्ठः ॥ जातो योऽसौ क्षिप्रमेवैति मृत्युं भौमः सौरोऽप्येवमेवं विधत्ते ॥ ४२ ॥ सुतमदन-
नवांत्यलग्नरंध्रेष्वशुभयुतो मरणाय शीतरश्मिः ॥ भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतो
विलोकितो वा ॥ ४३ ॥ होरास्ताष्टमगेष्वसत्सु हिमगौ क्षीणे तु जातः शिशुः स्वर्गं गच्छति

 

सौम्यकेंद्ररहितौ जीवो न चेद्वीक्षते॥ लग्नांत्याष्टमधर्मभेषु सहिताश्चंद्रार्कभौमार्कजाः क्षिप्रं गच्छति चांतकं सुरपतेर्मंत्री न चेद्वीक्षते ॥ ४४ ॥ लग्ने चंद्रे भास्करे वा बलिष्ठे पापैः केंद्रे नैधने च त्रिकोणे ॥ शुक्रः सूर्यः शीतगुश्चैकसंस्था नाशं गच्छेद्योगमेवैति जातम् ॥ ४५ ॥ मेषे विंशति-भागे स्यान्मृत्युं दद्यान्निशाकरः ॥ एकविंशतिभागस्तु सिंहे तत्त्वैस्तु गोघटे ॥ ४६ ॥ अष्टमो मेषचंद्रस्तु त्रयोविंशतिभागकः ॥ द्वाविंशतिः कुलीरे तु तुलायां वेदभागकः ॥ ४७ ॥विंशति-र्मकरे चंद्रः कन्यायां प्रथमांशकः ॥ धन्विन्यष्टादशो भागो मीने दशमभागयुक् ॥ ४८ ॥ द्वा-विंशतिर्नृयुग्मे तु चंद्रोऽप्येवं मृतिप्रदः ॥ ये ये निशाकरांशास्तु मृत्युभागा विवक्षिताः ॥ ४९ ॥ तावद्भिर्वत्सरैर्जातो मृत्युमेति न संशयः ॥ लग्नजन्मपयोर्यस्तु शत्रुर्लग्नगतः शुभः ॥ ५० ॥ करोति मृत्युं जातस्य तयोर्मृत्युं शुभाशुभम् ॥ रंध्रे धरासूनुदिनेशसौरा जातस्तु मृत्युं समुपैति मासात् ॥ ५१ ॥ केतुश्च यस्मिन्नुदितेऽत्र जातो मासद्वयेनैव यमं प्रयाति ॥ भूपालयोगा यवनैः प्रदिष्टा राज्ञः कुले जातनरा धरेशाः ॥ ५२ ॥ तेऽतिप्रयोगास्तु तद-न्यजाताः सद्यो यमं यांति नरास्तथैवम् ॥ भानुर्नभस्थो यदि पापदृष्टो धरासुतर्क्षे शशिन-श्च गेहे ॥ ५३ ॥ जातस्तु मृत्युं समुपैति शीघ्रं शुभैर्न दृष्टो वियुतोऽपि चैवम् ॥ लग्ने ये द्रेष्काणा

निर्गलाहिविहंगपाशधरसंज्ञाः ॥ ५४ ॥ मरणाय सप्तवर्षैः क्रूरयुताश्चापि संदृष्टाः ॥ रविचंद्रभौ-
मगुरुभिः कुजगुरुसौरेंदुभिस्तथैकस्थैः ॥ ५५ ॥ रविशनिभौमशशांकैर्मरणं खलु पंचभिर्वर्षैः॥
रविणा युक्तः शशिजः सौम्यैर्दृष्टो विनाशयति नूनम् ॥ ५६ ॥ एकादशभिर्वर्षैर्देवांकेऽपि
स्थितं जातम् ॥ लग्ने रविशनिभौमैः शुक्रगृहे सप्तमे शशी क्षीणः ॥ दृष्टो न देवगुरुणा सप्तभि-
रब्दैर्विनाशयति ॥ ५७ ॥ केंद्रे रविमुषिततनुः क्षितिजो मंदावलोकितोऽथ युतः ॥ वर्षचतुष्के-
णाशु मारयति किमत्र गणितेन ॥ ५८ ॥ लग्नाधिपतेश्चंद्रो मरणपदस्थोऽपि कृष्णतां याति ॥
क्रूरैः सकलैर्दृष्टो न शुभैर्वर्षैस्त्रिभिस्तु मारयति ॥ ५९ ॥ पापो विलग्नाधिपतिः शशांकादंत्य-
स्थितः क्रूरनिरीक्षितश्चेत् ॥ चंद्रांशकस्थो यदि वा तदीशो जातः शिशुः प्रेतपुरीं नवाब्दैः ॥६०॥
दृश्ये भागे संयुताः सौम्यखेटाः पापाः सर्वे यस्य जन्मन्यदृश्ये ॥ राहौ लग्ने पापयुक्तेऽथ दृष्टे
जातो मृत्युं याति पंचाब्दसंख्यैः ॥ ६१ ॥ राहुः सप्तमभवने शशिसूर्यनिरीक्षितो न शुभदृष्टः॥
दशभिर्द्वाभ्यां सहितैरब्दैर्जातं विनाशयति नूनम् ॥ ६२ ॥ घटालिसिंहे फणिनाथयुक्ते तस्मि-
न्विलग्ने सति पापदृष्टे ॥ जातो यमं सप्तदशे प्रयाति वर्षेंद्रपूज्येन युतो न दृष्टः॥ ६३ ॥ क्षीणेंदुः
पापसंदृष्टो राहुदृष्टो विशेषतः ॥ जातो यमपुरं याति दिनैः कतिपयैरपि ॥ ६४ ॥ जन्मे-

शलग्नाधिपती विलग्नात्षष्ठाष्टमांत्येषु दिनेशयुक्तौ ॥ जातो धनं द्वादशभिश्च वर्षैः प्रयाति सौ-
म्यैर्न युतौ न दृष्टौ ॥ ६५ ॥ होराधिपतिर्द्यूने पापाजितो मरणमेव विदधाति ॥ राशिं त्रिगुणी-
कृत्वा वर्षं मासेन संदेहः ॥ ६६ ॥ तरणींदुकुजाः पुत्रस्थाने युक्ता न सौम्यगाः ॥ जातो यमपुरं
याति नवमेऽब्दे न संशयः ॥ ६७ ॥ लग्नेश्वरे विलग्नस्थे पापैः सर्वैर्युतोक्षिते ॥ चतुर्थे मासि
मरणं याति पुत्रो न संशयः ॥ ६८ ॥ चंद्रलग्नाधिपः सूर्यः स्वपुत्रेण समन्वितः ॥ लग्नादष्टमरा-
शिस्थो द्वादशाब्दे स्थितेक्षितः ॥ ६९ ॥ षष्ठाष्टमे पापयुते सौम्यदृष्टिविवर्जिते ॥ आपोक्लिमे
विलग्नेशे षोडशे निधनं व्रजेत् ॥७०॥ परस्परक्षेत्रसमास्थितौ वा लग्नेशरंध्राधिपती न सौम्यौ ॥
रिःफारिभे वागधिपेन युक्ते त्वष्टादशाब्दे निधनं प्रयाति ॥ ७१ ॥ केंद्रेषु पापेषु निशाकरेण
सौम्यग्रहैर्वीक्षणवर्जितेषु ॥ षष्ठाष्टमे वा यदि वा शशांके जातः शिशुर्विंशतिवर्षमात्रम् ॥ ७२ ॥
जीवसहायः सूर्यो वा लग्नस्थः कीटराशिगः ॥ अष्टमाधिपतौ केंद्रे द्वाविंशे मरणं ध्रुवम् ॥ ७३ ॥
राहुः सहायश्चंद्रो वा जामित्रे चाष्टमेऽपि वा ॥ देवेज्ये लग्नगेहेऽस्मिन् द्वाविंशे मरणं भवेत् ॥
॥७४॥ पापद्वयांतरस्थे तु होरानाथेन सौम्यगे ॥ पितृजन्मनि जातस्तु पंचविंशे यमं व्रजेत्॥७५॥
मंदोदये शत्रुराशौ सौम्यैरापोक्लिमोपगैः ॥ षड्विंशे सप्तविंशे वा मरणं भवति ध्रुवम् ॥ ७६ ॥

चंद्रो मंदसहायस्तु सूर्यश्चाष्टमसंयुतः ॥ एकोनत्रिंशके वर्षे जातो यमपुरं व्रजेत् ॥ ७७ ॥
पापा जन्माष्टमार्गस्थाः सौम्याः केंद्रबहिःस्थिताः ॥ अस्मिन्योगे समुत्पन्ने त्वष्टाविंशे मृतिर्भ-
वेत् ॥ ७८ ॥ जन्मरंध्रपयोर्मध्ये निशानाथे व्यये गुरौ ॥ सप्तविंशतिवर्षे वा त्रिंशद्वर्षेऽपि वा
मृतिः ॥ ७९ ॥ रंध्रेशे जीवसंदृष्टे पापे पापनिरीक्षिते ॥ रंध्रस्थे जन्मपे वापि अष्टाविंशे मृति-
र्भवेत् ॥ ८० ॥ अष्टमाधिपतौ केंद्रे लग्ने तु बलवत्तरे ॥ त्रिंशद्वर्षाण्यसौ जीवेद्द्वात्रिंशज्जातक-
क्रमात् ॥८१ ॥ यः कश्चिदष्टमस्थश्चेद्यः कश्चिद्बलवान्स्वके ॥ त्रिंशद्वर्षाण्यसौ जीवेद्द्वात्रिंशज्जात-
कक्रमात् ॥ ८२ ॥ लग्नादष्टमराश्यंशे भानुपुत्रसमन्विते ॥ पापे बलाधिके लग्ने केंद्राद्बाह्ये
शुभे तथा ॥ ८३ ॥ अन्योन्यसंगतौ क्रूरौ लग्नस्थौ पापवीक्षितौ ॥ द्वादशे शीतरश्मौ च परमा-
युस्तथैव हि ॥ ८४ ॥ जन्माष्टमेशौ यदि केंद्रयुक्तौ रंध्रे तु यः कश्चन खेचरेंद्रः ॥ द्वाविंशके
तन्मरणं शुभैस्तु केंद्रेषु हीनेष्वहितैर्ग्रहेंद्रैः ॥ ८५ ॥ क्षीणे शशांके दिवसेशयुक्ते रंध्राधिपे केंद्र-
गतेऽष्टमेऽपि ॥ पापान्विते लग्नगते विहीने द्वात्रिंशदब्दे निधनं प्रयाति ॥ ८६ ॥ लग्नरंध्रपयो-
र्योगे स्फुटं तत्कृत्यसंयुतः ॥ शुभैरयुक्तः पापश्चेन्मृत्युः स्यात्सप्तविंशतौ ॥ ८७ ॥ लग्नाद्विलो
मे ससुतश्च चंद्रो रंध्रेश्वरे केंद्रगते च सौम्यैः ॥ दृष्टे युते वा परमायुरत्र त्रिंशत्परं नास्ति बलैर्वि-

हीनैः ॥ ८८ ॥ रंध्रेश्वरे भाग्यधनात्मयुक्ते लग्नाधिपे रंध्रयुते त्वसौम्यैः ॥ जातश्चतुर्विंशतिवर्ष-
मात्रं जीवत्यसौ शोभनदृष्टियुक्ते ॥ ८९ ॥ अष्टमाधिपतौ लग्ने लग्नेशे बलवर्जिते ॥ त्रिंशद्वर्षा-
ण्यसौ जीवेत्रिंशन्नातीव वर्तते ॥ ९० ॥ आपोक्लिमगते चन्द्रे लग्नेशे च तथैव च ॥ पापेक्षिते
बलैर्हीने जीवत्यायुस्तथैव च ॥ ९१ ॥ गुरुशुक्रौ च केंद्रस्थौ लग्नेशे पापसंयुते ॥ आपोक्लिमस्थे
संध्यायामायुः षट्त्रिंशदेवहि ॥ ९२ ॥ लग्नस्थिते वासरनायके तु पापांतरे शत्रुगते विहीने ॥
षट्त्रिंशदंतं परमायुरस्य शुभैर्न दृष्टे सति सत्यमेतत् ॥ ९३ ॥ भूसूनुचन्द्रौ तनुगौ शुभास्तु
केंद्राष्टमस्थानभवे युतोऽत्र ॥ जातो यदा मांद्युदये शिशुः स्यात् षट्त्रिंशकेऽब्दे निधनं
प्रयाति ॥ ९४ ॥ होराशास्त्राभ्यासबलात्संगृह्य विदुषां मुदे ॥ पारं त्यक्त्वा त्वसारं तु कृतं
व्येङ्कटशर्मणा ॥ ९५ ॥ इति सर्वार्थचिंतामणौ दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥
अथारिष्टभंगाः ॥ लग्नस्थिते देवगुरौ विशेषात् खेटान्निहन्याद्विबलांस्तथैव ॥ एको धराचंद्रधर-
प्रणामः समस्तपापं शमयेत्तथैव ॥ १ ॥ अत्यंतसत्वे यदि लग्ननाथे सौम्यान्विते तादृशदृष्टिमार्गे ॥
केंद्रस्थिते पापदृशा विहीने स भाग्यवान् जीवति दीर्घमायुः ॥ २ ॥ शशांको रंध्रनाथस्तु
सौम्यद्रेष्काणसंयुतः ॥ जातं शिशुं समं यातं प्रयत्नाद्रक्षयेच्छिशुम् ॥ ३ ॥ चंद्रः संपूर्णगात्रस्तु

सौम्यक्षेत्रांशगोऽपि वा ॥ सर्वारिष्टनिहंता स्याद्विशेषाच्छुक्रवीक्षितः ॥ ४ ॥ जीवभार्गवसौम्यानामेकः केंद्रगतो बली ॥ पापदृग्योगहीनश्चेत्सद्यो रिष्टस्य भंगकृत् ॥ ५ ॥ चंद्रोऽपि शत्रुराशिस्थो जीवशुक्रविदां यथा ॥ द्रेष्काणं शमयत्येव दुष्टं पापं हरिर्यथा ॥ ६ ॥ शुक्ले च पक्षे यदि रात्रिजन्म चंद्रोऽपि षष्ठाष्टमराशियुक्तः ॥ शुभेक्षितः सन्निह कृष्णपक्षे दृश्यः सपापैरवति प्रसूतम् ॥ ७ ॥ निशाकरे शोभनखेचरांशे शुभेक्षिते पूरितदीप्तिजालः ॥ जातस्य निःशेषमरिष्टमाशु यथा विषं निघ्नति वैनतेयः ॥ ८ ॥ प्रकाशमाने गगनेंद्रपूज्ये केंद्रस्थिते रक्षति जातसूनुम् ॥ सौम्यांशका जीवशशांकशुक्रसौम्या निहंत्याशु समस्तदोषम् ॥ ९ ॥ जन्माधिपः केंद्रगतः शुभश्चेज्जातं शिशुं रक्षति सौम्यदृष्टः ॥ स्वांशास्थितैः शोभनखेचरेंद्रैर्दृष्टस्तदान्यो विनिहंत्यरिष्टम् ॥ १० ॥ लग्नात्तृतीयारिभवे सराहौ पापैर्विमुक्ते शुभदृश्यमाने ॥ विनाशयत्याशु समस्तारिष्टं तूलं यथा वायुबलस्य वेगात् ॥ ११ ॥ शीर्षोदयस्थाः सकला ग्रहेंद्रा रिष्टं हरंत्याशु शुभांशकस्थाः ॥ पूर्णेंदुरन्यैर्वियुतः शुभैस्तु दृष्टो हरत्याशु समस्तरिष्टम् ॥ १२ ॥ सर्वग्रहेंद्रैः परिपूर्णचंद्रो दृष्टो हरत्याशु समस्तदोषम् ॥ नयैः स्वकीयैः प्रहरेत् क्षितीशो यथा तथा जन्मनि दोषजालम् ॥ १३ ॥ सौम्यग्रहैरतिबलैर्विबलैश्च पापैर्लग्ने च सौम्यभवनं शुभदृ-

ष्टियुक्तम् ॥ सर्वापदां विहरतो भवति प्रसूतिः पूजापरे खलु यथा पठनैर्ग्रहाणाम् ॥१४॥ उदयोऽगस्त्यमुनेः सप्तर्षीणां मरीचिपूर्वाणाम् ॥ सर्वारिष्टं नश्यति तम इव सूर्योदये प्रबलम् ॥ १५ ॥ अजवृषभकार्किलग्ने रक्षति राहुः समस्तपीडाभ्यः ॥ पृथिवीपतिः प्रसन्नः कृतापराध यथा पुरुषम् ॥ १६ ॥ चंद्रः शुभवर्गस्थः क्षीणोऽपि शुभेक्षितो हरति रिष्टम् ॥ जलमिव हंत्यतिसारं जातिफलवत्फलं कथितम् ॥ १७॥ सप्ताष्टमषष्ठस्थाः शशिनः सौम्या हरंति कष्टफलम् ॥ युवतिजनस्य कटाक्षा ललिता यूनां यथा नूनम् ॥१८॥ पापराशिगते चंद्रे तदीशेन निरीक्षिते ॥ सौम्यग्रहाणां वर्गस्थे कृपणश्च धनं यथा ॥ १९ ॥ चंद्राधिष्ठितराशीशे लग्नस्थे शुभवीक्षिते ॥ भृगुणा वीक्षिते चंद्रे स्वोच्चे रिष्टं हरेत्तदा ॥ २० ॥ स्वोच्चस्थे स्वगृहेऽथवापि सुहृदां वर्गे स्वकीये दिवा संपूर्णः शुभवीक्षितः शशधरो वर्गेषु सौम्येषु वा ॥ शत्रूणामवलोकनेन रहितः पापैरयुक्तोक्षितो रिष्टं हंति सुदुस्तरं दिनमणिः प्रालेयनाशं यथा ॥ २१ ॥ अध्यायो रिष्टभंगाख्यः प्रोक्तश्चिंतामणौ मया ॥ मधुवृत्त्या गृहीत्वा तु व्यङ्कटेशेन शर्मणा ॥२२॥ इति सर्वार्थचिंतामणौ एकादशोऽध्यायः ॥११॥

अथ मध्यायुः ॥ द्वात्रिंशदूर्ध्वमर्वाक्कु सप्तत्या मध्यमायुर्योगान् ॥ तावत्कालनियमितान् योगविशेषानहं वक्ष्ये ॥ १ ॥ चंद्रे कुजर्क्षे तनुगे प्रदृष्टे क्रूरग्रहैः शोभनखेचरेंद्रैः ॥ केंद्राद्बहिष्ठैर्निधनं

प्रयाति वर्षैस्त्रयस्त्रिंशसमानकैस्तु ॥ २ ॥ पापग्रहे रंध्रपतौ सचंद्रे केंद्रस्थिते वा यदि वा त्रिकोणे॥ निरीक्षिते पापखगैर्नभस्थैर्जातस्त्रयस्त्रिंशदुपैति वर्षम् ॥ ३ ॥ लग्ने शनौ रात्रिकरेण युक्ते भौमे घटस्थे सुरसंख्यवर्षैः ॥ क्रूरांतरे लग्नगते तदीशे युग्मास्थिते देवगुरौ रिपुस्थे ॥ ४ ॥ जातस्तु मृत्युं मुनिवह्निवर्षैः प्रयाति शास्त्रज्ञपरैः प्रदिष्टम् ॥ सभूमिजे रंध्रपतौ विलग्ने राशौ स्थिरे वा यदि वा धराजे ॥ ५ ॥ रिःफेऽष्टमे मृत्युमुपैति जातस्त्यब्दैर्द्विचत्वारिसमानकैर्वा ॥ केंद्रे गुरौ कर्मणि सूर्यपुत्रे लग्ने चरे वेदयुगैः समानैः ॥ ६ ॥ गुरुशुक्रौ च केंद्रस्थौ लग्नेशे पापसंयुते ॥ आपोक्लिमस्थे संध्यायामायुः षट्त्रिंशदेव हि ॥ ७ ॥ स्वोच्चे विलग्ने क्षितिनंदने च जीवेऽस्तगे कर्मणि सूर्यपुत्रे ॥ जातो धनाढ्यो बहुशास्त्रवेत्ता वेदाब्धिवर्षैर्निधनं प्रयाति ॥ ८॥ लग्नेश्वरे रंध्रगते सपापे केंद्राद्बहिष्ठे यदि सौम्यखेटे॥ चत्वारिंशद्वत्सरे मृत्युमेति जातः पुत्रो नान्यथा शास्त्रमेतत् ॥९॥ जन्माधिपे रंध्रगते सपापे पापान्विते लग्नपतौ रिपुस्थे ॥ बलान्विते वा शुभदृग्विमुक्ते पंचाब्धिवर्षैर्निधनं प्रयाति ॥ १० ॥ मेषे शशांके तनुगे सुपूर्णे सौम्येक्षिते भूपतिरत्र जातः ॥ पापग्रहाणां च दृशा विहीने नागाब्धिवर्षैर्निधनं प्रयाति ॥ ११ ॥ शनैश्चरो लग्नगतः सहायस्त्वन्येन चंद्रो व्ययभेष्टमारौ ॥ वेदांतविज्ञानसुशीलवृत्तो जातस्तु मृत्युं नयनेषु वर्षे ॥ १२ ॥

चापे गुरौ लग्नगतेऽष्टमस्थे भौमे सराहौ मुनिबाणवर्षैः ॥ रंध्रेश्वरे कामगते शशांके पापान्विते षण्मृतिगेऽष्टबाणे ॥ १३ ॥ सरंध्रगे देवगुरौ विलग्ने कुंभे सपापे यदि केंद्रराशौ ॥ सर्वज्ञानां पुण्यवान् शास्त्रवेत्ता जातस्तु षष्ट्या निधनं प्रयाति ॥ १४ ॥ केंद्रे सपापे तनुपे व्ययस्थे लग्नेश्वरे रंध्रगतेहिवह्नौ ॥ लोकांतरं प्रापयति स्म जातं कुशीलवृत्तं कुलपांसनं तम् ॥ १५ ॥ सौरौ विलग्ने हिबुके शशांके कुजे कलत्रे गगने दिनेशे ॥ कवीज्यसौम्येष्विह तैर्युतेषु नरेश्वरो जीवति वर्षषष्ट्या ॥ १६ ॥ लग्नाधिमाने विबुधारिपूज्ये बुधेज्यचंद्रैः परिपश्यमाने ॥ जातं नरं भूमिपातिं धनाढ्यं करोति षष्ट्या सुतभेंद्रपूज्ये ॥१७॥ सिते विलग्ने बुधभास्करात्मजौ चतुष्टयस्थौ परमोच्चखेचराः ॥ तृतीयलाभर्क्षगतास्तु योगे महीपतिः स्यान्निधनं च षष्ट्या ॥ १८ ॥ होराजन्माधिनाथौ निधनमुपगतौ मृत्युनाथे च केंद्रे योगे जातो नरोऽस्मिन् जनयति न परं कीर्तिवित्तान्वितं च ॥ षष्ट्यां षड्भिर्युतायां निधनमभिहितं नंदकोके तदिष्टं वर्षे त्रिंशेऽथवा स्यास्त्वखिलामिति खगैर्जायते पार्थिवेंद्रः ॥ १९ ॥ नक्षत्रनाथसहितः सविता नभस्थः सौरिर्विलग्नसहितो हिबुके सुरेज्यः ॥ अस्मिन्योगे जायमानो मनुष्यो क्षोणीपतिर्नैधनमष्टषष्ट्या ॥ २० ॥ जीवे विलग्ने बुधसूर्ययुक्ते मीने शनौ द्वादशशीतरश्मौ ॥ जातो योगे चार्थवान् मृत्युभाक् च जीवेत्

षष्ट्या षट्सहायो मनुष्यः ॥ २१ ॥ चंद्रे विलग्ने स्वगृहं प्रयाते नीचे शनौ भास्करसप्तमे च ॥
अस्मिन् जातो मानुषो ज्ञानिमुख्यो जीवेत्षष्टिः पंचभिः संप्रयुक्तः ॥ २२ ॥ नीचे मंदे केंद्रगे वा
त्रिकोणे सौम्ये केंद्रे भास्करे वा ससौम्ये ॥ योगे जातः पंडितो धर्मशीलो ज्ञानी प्राज्ञः सप्ततेर्व-
त्सराणाम् ॥ २३ ॥ प्रबले केंद्रगे सौम्ये निधने सौम्यवर्जिते ॥ लग्नाधिपेन दृष्टश्चेत्पापैर्जीवति
सप्ततिम् ॥ २४ ॥ पंचमस्थे धरासूनौ नीचे मंदेऽस्तगे रवौ ॥ अस्मिन् जातो मनुष्यस्तु
सप्तत्यां निधनं व्रजेत् ॥ २५ ॥ इत्येवं बहुधा मया निगदिता योगास्त्वसंख्या इमे ये प्रोक्ता
यवनादिभिर्मुनिगणैर्निश्चित्ययोगान् स्थितान् ॥ ज्ञात्वा सम्यगुदाहरंति मनसा ते यांति कीर्तिं
परामेवं प्रश्नविधौ सुजन्मसमये वैवाहिके कर्मणि ॥ २६ ॥ अथ दीर्घायुः ॥ दीर्घायुराप्नोति खगाः
समस्ताः शुभाशुभाः षड्भवनांतरस्थाः ॥ लग्नात्तथैवापरभागयुक्ताः शुभाशुभास्तद्विपरीत-
मन्यत् ॥ २७ ॥ लग्नादिषट्के शुभखेचरेंद्राः सर्वे बलाढ्यास्त्वपरे तु पापाः ॥ प्रदीप्तिमंतो
गुणवान् सुशीलः श्रीमानशीत्या निधनं प्रयाति ॥ २८ ॥ लग्ने केंद्रे शशिसुते कोणे
चंद्रे शुभे शनौ ॥ जातस्तु देवमुनिभिर्वर्षैः क्लिश्यत्यतः सुखम् ॥ २९ ॥ ओजराशिगताः सर्वे
पूर्णचंद्रसमन्विताः ॥ ओजलग्ने परं भाग्यं दीर्घमायुरुपैति सः ॥ ३० ॥ समराशिगताः सर्वे

व. चि. कृष्णचंद्रसमन्विताः ॥ स्त्रीणां तु जननं युग्मलग्नभाग्यमुपैति सा ॥ ३१ ॥ भाग्ययोगेषु दीर्घा- ज०
॥६१॥ युर्वदंति यवनादयः ॥ तत् पृथक् पृथगे वाहुर्वराहमिहिरादयः ॥ ३२ ॥ यत्र तत्र तयोर्योगस्त- १२
दिष्टं मम संमतम् ॥ कदाचित् कांतयोर्योगः सर्वथा न भवत्तदा ॥ ३३ ॥ जीवे सचंद्रे केंद्रस्थे
साम्यदृष्टे परे ग्रहाः ॥ दशमात्परतो युक्तास्त्वशीत्या निधनं भवेत् ॥ ३४ ॥ चतुष्टयगताः
सौम्याः पापाश्चाष्टमवर्जिताः ॥ चंद्रो विलग्नात् षष्ठस्थः षडशीत्या यमं व्रजेत् ॥ ३५ ॥ पापा-
स्त्रिलाभषष्ठस्थाश्चंद्रः षष्ठाष्टमं गतः ॥ केंद्रे गुरौ त्रिसाहस्रग्रामनाथाश्चिरायुषः ॥ ३६ ॥ लग्न-
त्रिकोणे निधनायकेंद्रे ग्रहास्त्रयः पंचचतुष्टये वा ॥ जातास्त्रियं प्राप्य जितेंद्रियस्तु जीवेत्सयत्ना-
न्नृपतिः परे हि ॥ ३७ ॥ जीवे लग्नेश्वरात्केंद्रे केंद्रकोणविवर्जिताः ॥ पापाः सुखानि गत्वा तु
जीवेद्वर्षशतं नरः ॥ ३८ ॥ जीवे लग्नेश्वरात्केंद्रे नियतिः सप्ततिः परा ॥ केंद्रे गुरौ लग्नगते दिनेशे
भूसूनुयुक्ते यदि वा मृतिस्थे ॥ जातः श्रियं प्राप्य गुणाधिकारी शतं तु जीवेच्छरदां विशे-
षात् ॥ ३९ ॥ मीनांत्यलग्ने खचरैश्चतुर्भिः केंद्रस्थितैर्नागशतं स जीवेत् ॥ निशाकरे लग्नगते ॥६१॥
स्वभागे मीनस्थिते वा यदि वा कुलीरे ॥ ४० ॥ ग्रहैर्विहीने खचरैश्चतुर्भिः केंद्रस्थितैर्नागशतं
स जीवेत् ॥ सिंहे विलग्ने खचरैश्चतुर्भिस्त्रिकोणगैर्जीवति तावदेव ॥ ४१ ॥ त्रिभिर्ग्रहैः स्वोच्चग-

तौर्विलग्ने वृषे कुलीरे सगुरौ तथैव ॥ मृगे कुजे कार्किणि देवपूज्ये केंद्रेषु शेषाः परमायुरत्र॥४२॥
भृगौ चतुर्थे सगुरौ विलग्ने सेंदौ शनौ कर्मणि पापहीने॥ जातो नरोऽस्मिन् समुपैति दीर्घमायुश्च
विद्यां यशसा समेति ॥ ४३ ॥ लग्ने मृगापरार्धे तु पूर्वार्धे भौमसंयुते ॥ लग्ने शशांकसहिते गुरौ
केंद्रे परं वयः ॥४४॥ नृयुग्मपूर्वार्धगते भौमे लग्नात्परार्धके ॥ चापपूर्वार्धगे जीवे लग्ने त्वपरभा-
गगे ॥ ४५ ॥ सौरिः केंद्रे भृगोः पुत्रे सचंद्रे त्वपरं वयः ॥ कन्यापूर्वार्धगे सौम्ये परार्धे लग्नमा-
गते ॥ ४६ ॥ ग्रहैस्त्रिभिर्वा स्वोच्चस्थैः शतायुस्त्वपरं वयः ॥ पापास्त्रिषष्ठलाभस्थाः सौम्ये
लग्नांन्यभागके ॥ ४७ ॥ लग्ने सौरे गुरौ केंद्रे भृगौ वा त्वपरं वयः ॥ नृयुग्मपूर्वार्धगते धरात्मजे
लग्ने परार्धे सगुरौ विशेषात् ॥ केंद्रेऽच्छविद्यां सहितेऽत्र जातः शतात्परं जीवति पुण्यभाक्
च ॥ ४८ ॥ अनिमिषपरमांशके विलग्ने शशितनये गवि पंचवर्गलिप्ते ॥ भवति हि परमायुषः
प्रमाणं यदि सहिताः सकलाः स्वतुंगभेषु ॥ ४९ ॥ अथामितायुः ॥ गुरुशशिसहिते कुलीरलग्ने
शशितनये भृगुजे च केंद्रयाते ॥ भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात्
॥ ५० ॥ लग्ने घटे देवगुरौ झषस्थे व्यये गुरौ वासरपो विलग्ने ॥ जातः परं ब्रह्म परं प्रयाति
रसायनःवेदशवर्धितं तत् ॥ ५१ ॥ सिंहे विलग्ने सगुरौ भृगौ तु कुलीरगे सोमसुते धनस्थे ॥

पापग्रहैः षट्त्रिदशायगैश्च सहस्रवर्षं समुपैति जातः ॥ ५२ ॥ दिनेशभौमौ हिबुके विलग्ने
मंदान्विते भोगिपतौ व्ययस्थे ॥ शेषग्रहैर्मृत्युगृहोपपन्नैः सहस्रवर्षद्वयमत्र जातः ॥ ५३ ॥
अजे विलग्ने च रवौ सुखस्थे माने यमे भूमिसुते कलत्रे ॥ रिःफे शशांके बलपूर्णयुक्ते रसायना-
द्यैर्द्विसहस्रमायुः ॥ ५४ ॥ वृषे शशांके तनुगे विशेषात् समन्विते चंद्रजजीवशुक्रैः ॥ जातस्तु
देवेंद्रपदं प्रयाति शेषग्रहैरर्धसमन्वितैर्वा ॥ ५५ ॥ जीवे विलग्ने स्वगृहं प्रपन्ने शून्ये नृयुग्मे
भृगुजे तु केंद्रे ॥ रसायनाद्यैर्बहुवर्षजीवी जातस्तु देवेंद्रपदं प्रयाति ॥ ५६ ॥ एकर्क्षगैर्व्योमचरै-
रशेषैस्त्रिकोणगैः केंद्रचतुष्टयस्थैः ॥ जातः शिशुर्नश्यति जातमात्राज्जीवेद्युगांतं यदि मंत्रसिद्ध्या
॥ ५७ ॥ त्रिकोणे पापनिर्मुक्ते केंद्रे सौम्यविवर्जिते ॥ निधने पापरहिते जातस्त्वमरसन्निभः
॥ ५८ ॥ लग्ने वृषे शुक्रयुते गुरौ तु केंद्रान्विते षट्त्रिदशायसंस्थैः ॥ रसायनाद्यैरिह मंत्रसिद्ध्या
जातस्तु देवेंद्रपदं प्रयाति ॥ ५९ ॥ शनौ तुलायां मकरे गुरौ च लग्ने कुलीरे वृषभे शशांके ॥
जातः सुखी ब्रह्मपदं प्रयाति प्रसाधनाद्यैरिह मंत्रसिद्ध्या ॥ ६० ॥ वर्गोत्तमे लग्नगते कुलीरे केन्द्रे
गुरौ भूमिसुते कलत्रे ॥ सिंहासनांशे भृगुजे विशेषाद्रसायनाद्यैरमितायुरेति ॥ ६१ ॥ कन्यांत्यलग्ने
सबुधे कलत्रे जीवे यदा गोपुरभागयुक्ते ॥ मृदंशके वा दिननाथपुत्रे जातस्त्वसंख्यायुरुपैति ॥६२॥

सूनुः ॥ ६२ ॥ देवलोकांशके शुक्रे केंद्रस्थे धरणीसुते ॥ सिंहासनांशके जीवे केंद्रे जातस्त्वसं-
ख्यकः ॥६३॥ उत्तमांशे भृगौ केन्द्रे शनौ पारावतांशके ॥ स्वर्गलोके गुरौ केंद्रे त्वौषधाद्यैरसं-
ख्यकः ॥ ६४ ॥ गोपुरांशे भृगौ केंद्रे शुक्रे पारावतांशके ॥ त्रिकोणे कर्किलग्ने तु युगांतं स तु
जीवति ॥ ६५ ॥ चापांशे कर्किलग्ने च तस्मिन्द्रेवेंद्रपूजिते ॥ त्रिचतुर्भिर्ग्रहैः केंद्रे जातो ब्रह्मपदं
लभेत् ॥ ६६ ॥ तृतीयैकादशे शुक्रे गोपुराद्यंशकान्विते ॥ वृषे वर्गोत्तमे लग्ने ब्रह्मणः परमं पदम्
॥ ६७ ॥ लग्ने शुक्रे गुरौ कामे कन्यायामुडुनायके ॥ चापे मेषांशके लग्ने जातो याति परं पदम्
॥ ६८ ॥ पंचमे बुधसंयुक्ते गोपुराद्यंशकान्विते ॥ गुरौ घटे विलग्नेऽस्मिन् जातो ब्रह्मपदं लभेत्
॥ ६९ ॥ केंद्रे गुरौ लाभगतेऽर्कपुत्रे धने रवौ मांदियुते कलत्रे ॥ भाग्ये धरासूनुयुतेऽत्र जातो
युगांतकालं समुपैति मंत्रैः ॥ ७० ॥ त्रिकोणगो जीवबुधौ विशेषाल्लग्ने वृषे तत्र युते धराजे ॥
निशाकरे गोपुरभागयुक्ते जातः सहस्रद्वयवर्षमेति ॥ ७१ ॥ पक्षे सिते जन्म यदाह्नि काले केंद्रे
गुरौ वा शशिभे विलग्ने ॥ दारे कुजे भानुसुते सुखस्थे जातस्तु जीवेदयुताब्दसंख्यम् ॥ ७२ ॥
जीवमंदारशुक्राणामन्योन्यं केंद्रसंभवे ॥ त्रिकोणे वा यदा याते जातस्त्वयुतवत्सरः ॥ ७३ ॥
शुभैर्युक्ते चतुष्केंद्रे पापैः षट्त्रिभवान्वितैः ॥ सिंहे लग्ने यदा जातो जीवेत्षडयुतानि सः ॥७४॥

अथ मुनियोगः ॥ कर्क्यादिस्थैर्ग्रहैः सर्वैर्गुरुचंद्रादिभिर्यदा ॥ शन्यंतैः परमोच्चस्थैर्मुनितुल्यो भवेन्नरः ॥ ७५ ॥ शन्यादिभौमपर्यंते लग्नादौ खेचराः शुभाः ॥ वैशेषिकांशसंयुक्ता जातास्त्वमरसन्निभाः ॥ ७६ ॥ आकल्पं जीवति नरो मृगे लग्ने कुजादिकाः ॥ रव्यंताः खेचराः सर्वे सोत्थे जीवेऽह्नि जन्मनि ॥ ७७ ॥ मेषांतलग्ने सगुरौ भृगौ वा निशाकरे गोधनुमध्यमांशे ॥ सिंहासनांशे यदि वा धराजे जातस्त्वसंख्याब्दमुपैति मंत्रैः ॥ ७८ ॥ स्थिरे रवौ सोमसुतेन युक्ते चंद्रे वृषस्थे मिथुने च शुक्रे ॥ गुरौ कुलीरे यदि वा विलग्ने शनौ तुलायां मुनिसाम्यमेति ॥ ७९ ॥ देवलोकांशके चंद्रे भौमे पारावतांशके ॥ सिंहासने रवौ लग्ने जातो मुनिसमो भवेत् ॥ ८० ॥ मेषलग्ने रवौ माने जीवे स्वोच्चसमन्विते ॥ त्रिषडायगते पापे जातो मुनिसमो भवेत् ॥ ८१ ॥ चिंतामणौ मया प्रोक्तं संख्यायुश्च मनीषिणाम् ॥ यदुक्तं पूर्वकैः सर्वं तत्तदेव मयाधुना ॥ ८२ ॥ इति सर्वार्थचिंतामणौ द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥



अथ दीप्तादि ॥ दशानुरोधेन फलं वदंति मुनीश्वरा जातशुभाशुभं तत् ॥ सारं समुद्धृत्य तदेव वक्ष्ये भेदं यथा विस्तरतो दशानाम् ॥ १ ॥ दीप्तः स्वस्थस्तु मुदितः शांतो हीनोऽतिदुःखितः ॥ विकलश्च खलः कोपी नवधा खेचरो भवेत् ॥ २ ॥ उच्चस्थः खेचरो दीप्तः स्वस्थः स्वक्षेत्रमि-

त्रभे ॥ मुदितः समभे शांतस्त्वपरो हीन उच्यते ॥३॥ शत्रुभे दुःखसंयुक्तो विकलः पापसंयुतः ॥
खलः पराजितो ज्ञेयः कोपी स्यादर्कसंयुतः ॥४॥ पृथक् पृथक् फलं तेषां दशाकालविशेषतः ॥
तत्र नामानुरोधेन परिपाके वदंति हि ॥ ५ ॥ पाके प्रदीप्तस्य धराधिपत्यमुत्साहशौर्यं धनवा-
हनं च ॥ स्त्रीपुत्रलाभं सुखबंधुपूज्यं क्षितीश्वरान्मानमुपैति विद्याम् ॥ ६ ॥ स्वस्थस्य खेटस्य
दशाविपाके स्वस्थो नृपाल्लब्धधनादिसौख्यम् ॥ विद्यायशःप्रीतिमहत्त्वतां च दारार्थभूम्यात्म-
जधर्ममेति ॥ ७ ॥ मुदान्वितस्यापि दशाविपाके वस्त्रादिभूगंधसुतार्थधैर्यम् ॥ पुराणधर्मश्रव-
णादिगानदानादियानांबरभूषणाप्तिः ॥ ८ ॥ दशाविपाके सुखधैर्यमेति शांतस्य भूपुत्रकल-
त्रयानम् ॥ विद्याविनोदान्वितधर्मशास्त्रं बह्वर्थदेशाधिपपूज्यतां च ॥ ९ ॥ स्थानच्युतिर्बंधुविरो-
धता च हीनस्य खेटस्य दशाविपाके ॥ जीवत्यसौ कुत्सितहीनवृत्त्या त्यक्तो जनै रोगनिपीडितः
स्यात् ॥ १० ॥ दुःखान्वितस्यापि दशाविपाके नानाविधं दुःखमुपैति नित्यम् ॥ विदेशगो बंधु-
जनैर्विहीनश्चोरादिभूपैर्भयमाभिशस्तः ॥ ११ ॥ वैकल्यखेटस्य दशाविपाके वैकल्यतां याति
मनोविकारम् ॥ पित्रादिकानां मरणं विशेषात्स्त्रीपुत्रयानांबरचोरपीडाम् ॥ १२ ॥ दशाविपाके
कलहं वियोगं खलस्य खेटस्य पितुर्वियोगम् ॥ शत्रुं जनानां धनभूमिनाशमुपैति नित्यं स्वजनैश्च

निद्यः ॥ १३ ॥ कोपान्वितस्यापि दशाविपाके पापं समायाति बहुप्रकारैः ॥ विद्यायशःस्त्रीधनभूमिनाशं राज्ञां च वित्तं हरते च योगी ॥ १४ ॥ इति दीप्तादि ॥ अथ दशाफलानि ॥ भानोर्दशायां परमोच्चगस्य भूम्यर्थदारात्मजकीर्तिशौर्यम् ॥ संमाननं भूमिपतेः सकाशादुपैति संचारविनोदगोष्ठीम् ॥ १ ॥ उच्चान्वितस्यापि रवेर्दशायां गोवृद्धिधान्यार्थपरिश्रमं च ॥ संचारयुग्बंधुजनैर्विरोधं देशाद्विदेशं चरति प्रकोपात् ॥ २ ॥ प्रचंडवेश्यागमनं क्षितीशादुपैति वृत्तिं रतिकेलिमानम् ॥ मृदंगभेरीवरयुक्तयानमन्योन्यवैरं लभते मनुष्यः ॥ ३ ॥ आरोहिणी वासरनायकस्य दशा महत्त्वं कुरुतेऽति सौख्यम् ॥ परोपकारं सुतदारभूमिगोवाजिमातंगकृषिक्रियादीन् ॥ ४ ॥ दशावरोहादिननायकस्य कृषिक्रियावित्तगृहेष्टनाशम् ॥ चोराग्निपीडां कलहं विरोधं नरेशकोपं कुरुते विदेशम् ॥ ५ ॥ नीचस्थितस्यापि रवेर्विपाके मानार्थनाशं क्षितिपालकोपात् ॥ स्वबंधुनाशं सुतमित्रदारैः पित्रादिकानामयकीर्तिमेति ॥ ६ ॥ अत्यंतनीचान्वितसूर्यदाये विपत्तिमाप्नोति गृहच्युतिं च ॥ विदेशयानं मरणं गुरूणां स्त्रीपुत्रगोभूमिकृषेर्विनाशम् ॥ ७ ॥ मूलत्रिकोणस्थरवेर्विपाके क्षेत्रार्थदारात्मजबंधुसौख्यम् ॥ राजाश्रयं गोधनमित्रलाभं स्वस्थानयानादिकमेति राज्यम् ॥ ८ ॥ स्वक्षेत्रगस्यापि रवेर्दशायां स्वबंधुसौख्यं कृषिवित्तकी-

तिम् ॥ विद्यायशःप्रार्थितराजपूजां स्वभूमिलाभं समुपैति विद्याम् ॥ ९ ॥ दशाविपाके ह्यधि-
शत्रुगस्य रवेः प्रनष्टार्थकलत्रपुत्रः ॥ गोमित्रपित्रादिशरीरकष्टं शत्रुत्वमायाति जनैः समंतात्
॥१०॥ सपत्नराशिस्थितसूर्यदाये दुःखी परिभ्रष्टसुतार्थदारः ॥ नृपाग्निचोरैर्विपदं विवादं पित्रो-
र्विरोधं च दशांतमेति ॥११॥ स्वमित्रराशिस्थितसूर्यदाये स्वभृत्यपित्रात्मजराजपूजाम् ॥ स्व-
गेहवासं स्वजनस्य संगं यानादिभूषांबरताम्रलाभम् ॥१२॥ अत्यंतमित्रर्क्षगतस्य भानोर्दशावि-
पाके ह्यतिसौख्यमेति ॥ स्त्रीपुत्रधान्यार्थमनोविलासतटागयानांबरभूषणानि ॥ १३ ॥ समर्क्ष-
गस्यापि रवेर्दशायां समं जनैः स्यात्कृषिभूमिधान्यम् ॥ गोवाजियानांबरदेहसौख्यं स्त्रीपुत्रदोषं
रणपीडितः स्यात् ॥ १४ ॥ नीचान्वितस्यापि रवेर्दशायां नीचानुवृत्त्या कुनखी कुशीलः ॥
स्त्रीपुत्रधान्यार्थपशुक्रियादिमनोविकारं समुपैति हेयम् ॥ १५ ॥ उच्चान्वितस्यापि रवेर्दशायां
मनोविलासं लभते स्ववृत्त्या ॥ तीर्थाभिषेकं हरिकीर्तनं च प्राकारकूपादिपुराणशास्त्रम् ॥१६॥
पापान्वितस्य द्युमणेर्विपाके नित्यं मनः क्लिश्यति हेयबुद्ध्या ॥ कुभोजनं कुत्सितवस्त्रपानं
कुशीलवृत्त्या त्वधनं कृशत्वम् ॥ १७ ॥ दिनाधिनाथस्य शुभान्वितस्य पाके सुखं भूमिधना-
दिवस्त्रम् ॥ इष्टैर्विलासं स्वजनैः समाजं कल्याणवाग्जालविनोदगोष्ठीम् ॥१८॥ पापेक्षितस्यापि

सहस्रभानोर्दशाविपाके परमं तु दुःखम् ॥ पित्रोर्विनाशं सुतदारकष्टं चोराग्निभूपालकृतं
कृशत्वम् ॥ १९ ॥ करोति भानुः शुभवीक्षितश्चेद्विद्यायशःस्त्रीसुतवाग्विलासम् ॥ कांतिप्रतापं
रतिकेलिसौख्यं पित्रोः सुखं भूपतिमाननं च ॥ २० ॥ केंद्रान्वितस्यापि दिवाकरस्य दशाविपाके नृपदंडदुःखम् ॥ स्थानच्युतिं बंधुवियोगमेति भंगः कृषेर्वित्तपरिश्रमं च ॥ २१ ॥
त्रिकोणसंयुक्तरवेर्विपाके बुद्धिभ्रमं राजविमाननं च ॥ सौख्यादिहानिं निधनं पितुश्च कर्मादिवैकल्यमुपैति काले ॥ २२ ॥ उच्चांशकस्य च दशा विदधाति वृत्तिं नित्यं प्रतापजनितां
महतीं श्रियं च ॥ नानाविनोदललितं रतिकेलिसौख्यं स्त्रीवस्त्रलाभमनिशं पितृवर्गनाशम्॥२३॥
नीचांशयुक्तस्य रवेर्दशायां भार्यार्थभूपुत्रविदेशयानम् ॥ त्यक्तो जनैर्बंधुविकुत्सितस्तु मनोविकारं ज्वरमेहरोगम् ॥ २४ ॥ आदौ सूर्यदशायां दुःखं पितृरोगकृतक्षयश्चाधिः ॥ मध्ये पशुधनहानिश्चांते विद्यामहत्त्वं च ॥ २५ ॥ दशाविपाके धनहानिमेति षष्ठस्थभानोरतिदुःखजालम् ॥
गुल्मक्षयोद्भूतपवित्ररोगं मूत्रादिकृच्छ्रं त्वथवा प्रमेहम् ॥ २६ ॥ रंध्रस्थभानोरपि वा दशायां
देहस्य कष्टं त्वथवाग्निछिद्रम् ॥ चातुर्थिकं नेत्रविकारकासं ज्वरातिसारं स्वपदच्युतिं च ॥२७॥
भानोर्द्वादशगस्य चेद्यदि दशा क्लेशार्थहानिं कृशं स्त्रीवध्वात्मजभूमिनाशमथवा पित्रोर्विनाशं

कलिम् ॥ स्थानात्स्थानपरिभ्रमं विषकृतं राज्ञो भयं पादरुग्विद्यावादविनोदगोष्ठिकलहं गोवाजिसंपीडनम् ॥ २८ ॥ पुत्रोत्पत्तिविपत्तिमत्र कुरुते भानोर्धनस्थस्य वा क्लेशं बंधुवियोगदुःखकलहं वाग्दूषणं क्रोधनम् ॥ स्त्रीनाशं धननाशनं नृपभयं भूपुत्रयानांबरं सर्वं नाशमुपैति तत्र शुभयुग्वाच्यं न चैतत्फलम् ॥ २९ ॥ भानोर्विक्रमयुक्तस्य दशाधैर्यं महत्सुखम् ॥ नृपमाननमर्थाप्ति भ्रातृवैरं विपत्तथा ॥ ३० ॥ सुखस्थितस्यापि रवेर्दशायां भोगार्थभूभृत्यकलत्रहानिम् ॥ क्षेत्रादिनाशं स्वपदच्युतिं वा यानच्युतिं चोरविषाग्निशस्त्रैः ॥ ३१ ॥ दारान्वितस्यापि रवेर्दशायां कलत्ररोगं त्वथवा मृतिं वा ॥ कुभोजनं कुत्सितपाकजातक्षीरादिदध्याज्यविहीनमन्नम् ॥ ३२ ॥ कर्मस्थितस्यापि रवेर्दशायां राज्यार्थलाभं समुपैति धैर्यम् ॥ उद्योगसिद्धिं यशसा समेतं जयं विवादे नृपमाननं च ॥ ३३ ॥ आयस्थितस्यापि दशाविपाके भानोर्धनाप्तिं शुभकर्मलाभम् ॥ उद्योगसिद्धिं सुतदारसौख्यं यानादिभूषांबरदेहसौख्यम् ॥ ३४ ॥ संज्ञाध्याये यस्य यद् द्रव्यमुक्तं कर्माजीवे यस्य यच्चोपदिष्टम् ॥ भावस्थानालोकयोगोद्भवं च तत्तत्सर्वं तस्य योज्यं दशायाम् ॥ ३५ ॥ सूर्ये स्थानबलाधिके कृषिधनं गोभूमियानांबरं सौख्यं राजसुमाननं परधनैः संयुज्यते कांतिमान् ॥ तत्पाके शयनांबरादि लभते स्वोपकारं महाकीर्ति

भूषणमिष्टबंधुसहितं तीर्थाभिषेकं महत् ॥ ३६ ॥ रवौ यदा स्थानबलेन हीने तत्पाककाले
बलमर्थनाशम् ॥ स्थानच्युतिं बंधुविरोधतापं देशाद्विदेशं समुपैति दुःखम् ॥ ३७ ॥ दिग्वीर्य-
युक्ते दिवसेश्वरे तु दिगंतराक्रांतधनादिसौख्यम् ॥ तत्तद्दिशः प्राप्तयशोर्थभूमिर्नोचेत्तथा तादृ-
शमत्र नास्ति ॥ ३८ ॥ तत्कालमानात्तनुते बलिष्ठे रवौ विपाके कृषिभूमिवित्ते ॥ उद्योगसिद्धिं
नृपमाननं च हीने रवौ कालबलेन नाशम् ॥ ३९ ॥ निसर्गतः सर्वमुपैति कालरवौ तु नैसर्गि-
कवीर्ययुक्ते ॥ यानार्थभूषांबरदेहसौख्यं हीने रवौ चोरनृपाग्निभीतिम् ॥ ४० ॥ रवौ तु चेष्टा-
धिकवीर्ययुक्ते स्वचेष्टितार्थागममेति सौख्यम् ॥ नृपस्य मानं सुतदारसौख्यं कृष्यादियानांबरमत्र
हीने ॥ ४१ ॥ रवौ खगानां बलदृष्टियुक्ते त्वचिंतयित्वा सकलं च सौख्यम् ॥ तज्जायते तत्परि-
पाककाले तेनैव हीने सकलं विनाशम् ॥ ४२ ॥ क्रूरादिषष्ट्यंशरवेर्दशायां स्थानच्युतिं वा
नृपचोरभीतिम् ॥ कोपाधिकं तत्र शिरोरुजं च पित्रादिनाशं त्वथवा तदीयम् ॥ ४३ ॥ मृदं-
शषष्ट्यंशरवेर्दशायां मृद्वंशपानांबरभूषणाप्तिम् ॥ नामद्वयं राजसुपूजितं च वेदांतशास्त्रागम-
धर्मशास्त्रम् ॥ ४४ ॥ पारावताद्यंशयुतस्य भानोर्दशाविपाके महतीं च कीर्तिम् ॥ बंध्वर्थदेशा-
धिपमाननं च पुत्रादिसन्मित्रकलत्रलाभम् ॥ ४५ ॥ स्वोच्चादिजन्यं फलमाहुरादौ पश्चात्फलं

खेचरदृष्टिजन्यम् ॥ मध्ये फलस्थानभवं तथैव पापग्रहाणामिह योजयंति ॥ ४६ ॥ भुजंगमत्र्यंशयुतस्य भानोर्दशाविपाके हि भयं विषाद्वा ॥ नृपाग्निपातित्यमनेकदुःखं पाशादिभृत्र्यंशयुतस्य चैवम् ॥ ४७ ॥ स्वोच्चस्थोपि दिनेशो नीचांशे चेत्कलत्रधनहानिः ॥ स्वकुलजबंधुविरोधः पित्रादीनां तथैव मुनिवाक्यम् ॥ ४८ ॥ उच्चांशकयुतो भानुर्नीचस्थोऽपि महत्सुखम् ॥ करोति राज्यभारं च दशांते विपदं कृशाम् ॥ ४९ ॥ इति रविदशाफलानि ॥ अथ चंद्रदशाफलानि ॥ अत्युच्चगस्यापि निशाकरस्य दशाविपाके कुसुमांबरं च ॥ महत्त्वतामेति कलत्रलाभं धनायतिं पुत्रमनोविलासम् ॥१॥ उच्चस्थितस्यापि निशाकरस्य प्राप्तौ दशायां सुतदारवित्तम् ॥ मिष्टान्नपानांबरभूषणाप्तिं विदेशयानं स्वजनैर्विरोधम् ॥ २ ॥ आरोहिणी चंद्रदशा प्रपन्ना स्त्रीपुत्रवित्तांबरसौख्यकीर्तिम् ॥ करोति राज्यं सुखभोजनं च देवार्चनं भूसुरतर्पणं च ॥ ३ ॥ निशाकरस्याप्यवरोहकाले स्त्रीपुत्रमित्रांबरसौख्यहानिम् ॥ मनोविकारं स्वजनैर्विरोधं चोराग्निभूपैः पतनं तटाके ॥ ४ ॥ नीचांशगस्यापि निशाकरस्य प्राप्तौ दशायां विविधार्थहानिम् ॥ कुभोजनं कुत्सितराजसेवा मनोविकारं समुपैति निंदाम् ॥५॥ मूलत्रिकोणस्थितचंद्रदाये नृपाद्धनं भूमिसुतार्थदारान् ॥ प्राप्नोति भूषांबरमानलाभं सुखं जनन्या रतिकेलिलोलम् ॥ ६ ॥ स्वक्षेत्रगस्यापि

निशाकरस्य नृपाद्धनप्राप्तिमुपैति सौख्यम् ॥ प्रचंडवेश्यागमनं क्षितीशात्संमाननं स्त्रीसुतबंधुसौ-
ख्यम् ॥ ७ ॥ निशाकरस्याप्यतिशत्रुराशिं गतस्य दाये कलहोऽर्थनाशम् ॥ कुवस्त्रता कुत्सि-
तभोजनं च क्षेत्रार्थदारात्मजतापयानम् ॥ ८ ॥ यानांबरालंकरणादिहानिं विदेशयानं परिचार-
कत्वम् ॥ देशांतरे भ्राम्यति बंधुहीनो दुःखी परिक्लिश्यति शत्रुदाये ॥ ९ ॥ मित्रर्क्षगस्यापि नि-
शाकरस्य पाकेऽर्थलाभं क्षितिपालमैत्रम् ॥ उद्योगसिद्धिं जलवस्तुलाभं चित्रांबराभूषणवाग्वि-
लासम् ॥ १० ॥ सुधाकरस्याप्यतिमित्रराशिगतस्य दाये त्वतिसौख्यमेति ॥ विद्याविनोदांकि-
तराजपूजां क्षेत्रार्थदारात्मजकामलाभम् ॥ ११ ॥ दशाविपाके समराशिगस्य कलानिधेः
कांचनभूमिलाभम् ॥ किंचित्सुखं बांधवरोगपीडा विदेशयानं लभते मनुष्यः ॥ १२ ॥ नीच-
स्थितस्य हि दशाविपदं महार्तिं क्लेशार्थदुःखवनवासमुपैति काले ॥ कारागृहं निगडपादकृशा-
न्नहीनो चोराग्निभूपतिभयं सुतदारशेषम् ॥ १३ ॥ क्षीणेंदुपाके सुकलं विहीनं राज्यार्थभूपुत्र-
कलत्रमित्रम् ॥ उन्मादचित्तं स्वजनैर्विरोधमृणत्वमायाति कुशीलवृत्त्या ॥ १४ ॥ पूर्णेंदुपाके ॥६७॥
परिपूर्णमेति विद्याविनोदांकितराजपूजाम् ॥ स्त्रीपुत्रभृत्यार्थमनोविलासं विशेषतः शोभनकर्म-
लाभम् ॥ १५ ॥ केनापि स्वोच्चस्थवियच्चरेण युक्तस्य चंद्रस्य दशाविपाके ॥ मनःप्रसादं

मदनाभिरामं स्त्रीपुत्रभृत्यादिविनोदगोष्ठीम् ॥ १६ ॥ पापान्वितस्यापि निशाकरस्य पाकेऽग्नि-
चोरक्षितिपालकोपैः ॥ दुःखं सुतस्त्रीसुतबंधुहानिं विदेशयानं त्वशुभादिकर्म ॥ १७ ॥ चंद्रस्य
सौम्यग्रहसंयुतस्य प्राप्तौ दशायां शुभकर्मलाभम् ॥ गोभूहिरण्यांबरभूषणानि तीर्थाभिषेकं
परदारसौख्यम् ॥ १८ ॥ पापेक्षितस्यापि निशाकरस्य दशाविपाके विफलं सुकर्म ॥ कोपाधि-
कं कुत्सितभोजनं च मातुर्वियोगं त्वथवा तदीयम् ॥ १९ ॥ निशाकरस्यापि शुभेक्षितस्य
परोपकारं महतीं च कीर्तिम् ॥ इष्टार्थबंध्वागमभूपमानं जलक्रियावस्त्रमनोविलासम् ॥ २० ॥
मूलत्रिकोणभेंदोर्दशाप्रपन्नो नरः सुबहुकोशः ॥ बहुपुत्रवान्विनीतो बंधुविरोधं प्रधानतां याति
॥ २१ ॥ सुखस्थितस्यापि निशाकरस्य मातुर्वियोगं सुखयानभूमिम् ॥ कृषेर्धनाप्तिं गृहकर्म-
लाभकीर्तिस्वनामांकितपद्यजालम् ॥ २२ ॥ दारान्वितस्यापि निशाकरस्य पाके कलत्राप्ति-
मुदाहरंति ॥ सुपुत्रसौख्यं शयनांबरं च प्रमेहमूत्रादिकृशं मनोरुक् ॥ २३ ॥ कर्मस्थितस्यापि
दशा प्रपन्ना चंद्रस्य कीर्तिं लभते सुविद्याम् ॥ यज्ञादिकर्माप्तिमनेकसौख्यं भूपुत्रयानांबरबंधु-
पूज्यम् ॥ २४ ॥ नीचांशगस्यापि दशा ददाति रोगं महत्तरं चेंदोः ॥ पादाक्षिरोगपीडां
युद्धेषु पराजयं गतोत्साहम् ॥ २५ ॥ उच्चांशगस्यापि दशा ददाति सौख्यं महत्तरं चेंदोः ॥

नानाविधधनलाभं भूपतिसन्मानदेहपुष्टिं च ॥ २६ ॥ चंद्रदशायामादौ नरपतिसन्मानकीर्तिसौ-
ख्यं च ॥ मध्ये स्त्रीसुतनाशं गृहधनसौख्यांबरं चांते ॥ २७ ॥ षष्ठस्य चंद्रस्य दशा प्रपन्ना
करोति दुःखं कलहं वियोगम् ॥ चोराग्निभूपालभयं जलेन मूत्रादिकृच्छ्रं धननाशमाहुः ॥२८॥
रंध्रस्थितस्यापि दशा प्रपन्ना देहस्य कार्श्यं जलभीतिदुःखम् ॥ विदेशयानं सकलैर्विरोधं
कुभोजनं मातृजनेषु नाशम् ॥ २९ ॥ रिःफगचंद्रदशायां संप्राप्तौ भूतिनाशनं कुरुते ॥
राज्ञोनृतधनभाग्यं स्थानविनाशं महत्परं दुःखम् ॥ ३० ॥ चंद्रस्य वित्तस्थितपाककाले
वित्तात्मजस्त्रीसुखभोगभाग्यम् ॥ मिष्टान्नपानं रतिकेलिसौख्यं धनागमं पुण्यजलाभिषेकम्
॥३१॥ तृतीयराशिस्थनिशाकरस्य दशा महत्सौख्यमनेकवित्तम् ॥ मनोदृढं भ्रातृजनादिसौख्यं
कृष्यन्नपानांबरभूषणाप्तिम् ॥ ३२ ॥ लाभस्थितस्यापि निशाकरस्य प्राप्तौ दशायां विविधार्थला-
भम् ॥ मृद्वन्नपानांबरकेलिलोलं स्त्रीपुत्रलाभं तु मनोविलासम् ॥ ३३ ॥ दिनेश्वरस्याहतचंद्रदाये
प्राप्नोति दुःखं स्वजनैर्विरोधम् ॥ भार्याक्षयं भूपनृपाग्निचौरैर्मातुर्वियोगं कृषिधान्यनाशम् ॥ ३४ ॥
चंद्रे स्थानबलाधिके धनसुखं कीर्तिं च विद्यागमं देवब्राह्मणतर्पणं नृपधनान्याप्नोति भूमिं धनम् ॥
स्त्रीरत्नांबरभूषणं कृषिधनं गोविक्रयं सेवनं मिष्टानादिरसायनं फलयुतं दध्याज्यमाल्यांबरम्

॥ ३५ ॥ निशाकरे स्थानबलैर्विहीने स्थानार्थनाशं स्वपदच्युतिं च ॥ स्वबंधुनाशं त्वथवा वियोगं कृषेर्विनाशं स्वमुपैति काले ॥ ३६ ॥ निशाकरे दिग्बलसंयुतेऽस्मिन् दिगंतरादागत-वस्तुचित्रम् ॥ विद्यागमं भूपतिमित्रतां च स्वबंधुपूज्यं गजवाजिभूमिम् ॥ ३७ ॥ चंद्रे तथा कालबलान्वितेऽस्मिन् तुरंगयानं कृषिगोमहीश्च ॥ विद्यादिघोषं नखकेशदंतचर्मांबरालंकृतवा-हनं च ॥ ३८ ॥ निसर्गवीर्यान्वितचंद्रदाये निसर्गतश्चापि करोति सौख्यम् ॥ अयत्नतो वाहन-देशलाभं नृपालपूज्यं बहुवाहनं च ॥३९॥ चंद्रे यदा दृग्बलवीर्ययुक्ते कृपाकटाक्षेण नरेश्वरस्य॥ समस्तभाग्यं समुपैति सौख्यं परोपकारं च मनोभिलाषम् ॥ ४० ॥ क्रूरादिषष्ट्यंशसमन्वितस्य दाये शशांकस्य बहुत्वदुःखम् ॥ स्त्रीपुत्रनाशं क्षितिपालकोपं विद्याविवादं कलहं जनैश्च ॥४१॥ मृद्वंशषष्ट्यंशसमन्वितस्य चंद्रस्य दाये बहुपुत्रलाभम् ॥ भृत्यार्थलाभं विजयं सुखं च कीर्तिं च विद्यां लभते विशेषात् ॥ ४२ ॥ पारावतांशसमन्वितस्य चंद्रस्य दाये महतीं च कीर्तिम्॥ विद्याविनोदं लभते च सौख्यं देवार्चनं पुण्यजलाभिषेकम् ॥ ४३ ॥ क्रूरद्रेष्काणसंयुक्तश्चंद्रो दिशति रोगताम् ॥ कार्यं पापसमायुक्तं गोब्राह्मणनिर्पीडनम् ॥ ४४ ॥ आदौ भावफलं प्रोक्तं स्थानजन्यं ततः फलम् ॥ अंशोद्भवं फलं पश्चाद्ग्रहजातफलं तथा ॥ ४५ ॥ इति चंद्रदशाफ-लम् ॥ इति सर्वार्थचिंतामणौ त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥

अथ भौमदशा ॥ अत्युच्चभूनंदनदायकाले क्षेत्रार्थलाभं समरे जयं च ॥ आधिक्यमन्वेति नरेशमानसहोदरस्त्रीसुतवाग्विलासम् ॥ १ ॥ उच्चं गतस्य हि दशा धरणीसुतस्य प्राप्नोति राज्यमथवा क्षितिपाच्च वित्तम् ॥ भूमध्यदारसुतबंधुसमागमं च यानादिरोहणविशेषविदेशयानम् ॥२॥ आरोहिणी भूमिसुतस्य सौख्यं दशा तनोत्यत्र नरेंद्रपूज्यम् ॥ प्रधानतां धैर्यमनोभिलाषं भाग्योत्तरं गोगजवाजिसंघम् ॥३॥ धरासुतस्याप्यवरोहकाले स्थानार्थनाशं कलिकोपदुःखम् ॥ विदेशवासं स्वजनैर्विरोधश्चोराग्निभूपैर्भयमेति कष्टम् ॥ ४ ॥ नीचस्थितस्यापि धरासुतस्य दाये कुवृत्त्या स्वजनादिरक्षा ॥ कुभोजनं गोगजवाजिनाशं स्वबंधुनाशं नृपवह्निचोरैः ॥ ५ ॥ मूलत्रिकोणस्थितभौमदाये मिष्टान्नपानांबरभूषणाप्तिम् ॥ पुराणधर्मश्रवणं मनोज्ञं भ्रात्रादिसौख्यं कृषिलाभमेति ॥ ६ ॥ स्वक्षेत्रगस्यापि धरासुतस्य दशाविपाके लभतेऽर्थभूमिम् ॥ स्थानाधिपत्यं सुखवाहनं च नामद्वयं भ्रातृसुखं सुखाप्तिम् ॥ ७ ॥ धरासुतस्याप्यतिशत्रुराशिं गतस्य दाये कलहादिदुःखम् ॥ नरेशकोपः स्वजनैर्विरोधं भूम्यर्थदारात्मजमित्ररोगम् ॥ ८ ॥ भूनंदनस्याप्यरिराशिगस्य दशाविपाके समरे च पीडाम् ॥ शोकाग्निभूपालविषैः प्रमादं पीडातिकृच्छ्रादिगुदाक्षिरोगम् ॥ ९ ॥ मित्रर्क्षगस्यापि कुजस्य दाये मित्रत्वमायाति सपत्नसंघैः ॥ चोरा-

ग्निमांद्याक्षिविषादभूर्मिं कृषेर्विनाशं कलिकोपदुःखम् ॥ १० ॥ कुजस्य दाये त्वतिमित्रराशिं
गतस्य भूपालकृतार्थभूमिम् ॥ वस्त्रादियज्ञादिविवाहदीक्षामुपैति देशांतरलब्धभाग्यम् ॥ ११ ॥
धरासुतस्यापि समर्क्षगस्य गृहोपकार्यं त्वधनप्रमाणात् ॥ स्त्रीपुत्रभृत्यात्मसहोदराणां शत्रुत्व-
माप्नोति नृपाग्निपीडाम् ॥ १२ ॥ नीचग्रहेणापि समन्वितस्य धरासुतस्यातिमनोविकारम् ॥
प्रेष्यत्ववृत्तिं परकीयमन्नं स्त्रीपुत्रनाशं नृपवह्निचौरैः ॥१३॥ किंचित्सुखं भोजनवस्त्रपानं कृच्छ्रेण
वृत्तिं नृपपूजनं च ॥ उच्चान्वितेनापि समन्वितस्य भौमस्य दाये सुतदारपीडाम् ॥१४॥ पापान्वि-
तस्यापि कुजस्य दाये पापानि कर्माणि करोति नित्यम् ॥ देवद्विजानां पशुदेवतानां सहोदराणां
च कुमार्गवृत्त्या ॥ १५ ॥ शुभान्वितस्यापि कुजस्य दाये केचित्सुखं देहकृशांगरोगम् ॥ भूपै-
र्विवादं समरे जयं च विद्याविवादं परदेशवासम् ॥ १६ ॥ शुभेक्षितधरासूनोर्दाये भूम्यर्थनाश-
नम् ॥ तस्मिन् गोचरसंयुक्ते त्वत्यंतं शोभनं भवेत् ॥ १७ ॥ आरस्य पापग्रहवीक्षितस्य प्राप्तो
दशायां बहुदुःखकष्टम् ॥ जनैः परित्यक्तकलत्रमित्रो देशांतरस्थः क्षितिपालकोपात् ॥ १८ ॥
केंद्रगतभौमदाये चोरविषाभ्यामुपैति दुःखानि ॥ कलहो वासविरोधं लभते देशांतरं
याति ॥ १९ ॥ चतुर्थराशिस्थितभौमदाये स्थानच्युतिं बंधुविरोधतां च ॥ चोराग्निपीडां

नृपतेः सकाशाद्भीतिं परे दुर्गपदे प्रयाति ॥ २० ॥ कलत्रयुक्तस्य कुजस्य दाये कलत्रहानिर्गु-
दमूत्रकृच्छ्रम् ॥ अगोचरस्थस्य च तादृशं फलं तदन्यथा चेत्फलमन्यथैव ॥ २१ ॥ कर्मस्थि-
तस्यापि कुजस्य पाके कर्मादिवैकल्यमुपैति दुःखम् ॥ उद्योगभंगं त्वपकीर्तिमेति विद्यासुत-
स्त्रीधनमानहानिः ॥ २२ ॥ अर्कगभौमदशायां दधाति शोकं स्त्रिया विरोधं च ॥ राज्याच्युतो
विपक्षाद्देशाद्देशांतरं याति ॥२३॥ वित्तगभौमदशायां संप्राप्तौ सस्यवृद्धिमुपयाति ॥ स्वकुला-
ध्यत्वं लभते नृपहृतवित्तं मुखाक्षिरोगं च ॥ २४ ॥ भ्रातृस्थानगतश्च सौख्यफलदो भूनंदनोऽ-
रातिहा धैर्यं वित्तसुतार्थदारसहजैः संगं नृपात्पूज्यताम् ॥ पुत्रस्थानगतस्य पुत्रमरणं बुद्धिभ्रमं
जाड्यतां शत्रुक्षेत्रगतस्य भूमिसहजैर्दुःखं महारोगभाक् ॥ २५ ॥ पंचमस्थधरासूनोर्दाये
कीर्तिविवेकताम् ॥ नेत्ररोगं त्वर्थनाशं दद्यात्कलहमेव वा ॥ २६ ॥ मरणपदस्थो भौमः करो-
ति दुःखं महद्भयं पाके ॥ स्फोटकमन्नविरोधं स्थानविनाशं विदेशयानं च ॥ २७ ॥ नवमस्थ-
धरासूनोर्दशापाके पदच्युतिम् ॥ गुरूणां च तथा कष्टं तपोविघ्नं महद्भयम् ॥ २८ ॥ आयस्थ-
भौमदाये करोति राज्यार्थभूपसन्मानम् ॥ समरे जयप्रतापं वाग्गुपकारं मनोजवं कीर्तिम् ॥२९॥
व्ययगतभौमदशायां प्राप्तौ धनहानिं नृपाद्भीतिम् ॥ स्थानसुतदारनाशं भ्रातॄणां विदेशवासं

च ॥ ३० ॥ उच्चांशसंयुक्तधराजकाले मनोभिलाषं विजयं सुखं च ॥ प्रचंडदासीगमनं नृपस्य प्रधानतां याति सुगंधपद्मम् ॥ ३१ ॥ नीचांशभौमदाये नीचयुतेत्यंतकर्मवैकल्यम् ॥ धनहानिभूपदंडः शिश्नोदरपरायणशीलः ॥३२॥ भौमदशायामादौ लभते विविधार्थमानहानिं च ॥ मध्येऽग्निभूपचोरैर्भीतिं तत्र विनिर्दिशेन्मतिमान् ॥ ३३ ॥ अंत्ये भ्रातृवियोगं सुतधनदाराग्निगुल्ममूत्रादिम् ॥ भौमेऽप्येवं न भवेद्गोचरयुक्ते विशेषतः कथयेत् ॥ ३४ ॥ भौमस्य संस्थानबलान्वितस्य दशाविपाकेऽर्थकलत्रसौख्यम् ॥ स्थानादिलाभं सुखकीर्तिशौर्यमुद्योगसिद्धिं त्वनयादुपैति ॥ ३५ ॥ स्थानवीर्यविहीनस्तु कुरुते स्वपदच्युतिम् ॥ कुजः कुसीदवृत्त्या च जीवनं भवति ध्रुवम् ॥ ३६ ॥ दिग्वीर्ययुक्तस्य कुजस्य दाये नृपात्सुलब्धार्थरणप्रतापम् ॥ गोभूमिकृष्यंवरयानलाभं दिगंतराक्रांतयशःप्रतापम् ॥ ३७ ॥ कालवीर्ययुतभौमदशायां काम्यलब्धिरिति सौख्यमुपैति ॥ पट्टवस्त्रमणिमौक्तिकलाभं चित्रवस्त्रकृषिगोगजलाभम् ॥३८॥ निसर्गवीर्यान्वितभौमदाये कृपाकटाक्षेण महीपतीनाम् ॥ समस्तभाग्यात्मजमित्रबंधुगोभूमिभूषांबरदेहसौख्यम् ॥ ३९ ॥ निसर्गतःस्थानधनाक्षिनाशं पित्ताधिकं कुत्सितभोजनं च ॥ कुजस्य दाये कुनखी पितृघ्नः सहोदराणामपि देहपीडा ॥ ४० ॥ वक्रान्वितस्य भौमस्य दशा-

काले महद्भयम् ॥ चोराग्निसर्पपीडां च वनवासं पदच्युतिम् ॥ ४१ ॥ दृग्वीर्ययुक्तस्य कुजस्य दाये कृपाकटाक्षेण महीपतीनाम् ॥ समस्तभाग्यात्मजमित्रबंधुगोभूमिभूषांबरदेहसौख्यम् ॥ ॥ ४२ ॥ क्रूरषष्ट्यंशसंयुक्तभौमदायेऽतिपीडनम् ॥ कारागृहप्रवेशं च समस्तविभवक्षयम् ॥ ॥ ४३ ॥ सोमषष्ट्यंशसंयुक्तभौमदाये शुभं भवेत् ॥ विवाहदीक्षा यज्ञं च सर्वेषामुपकारकम् ॥ ४४ ॥ पारावतादिसंयुक्तभौमदाये महत्सुखम् ॥ भूम्यर्थदारसंपत्तिधनवाहनभोजनम् ॥४५॥ क्रूरद्रेष्काणसंयुक्तकुजदाये मनोव्यथा ॥ निगडं विषभीतिं च पाशबंधनमेव च ॥ ४६ ॥ उच्चस्थोऽपि धरासूनुर्नीचांशकसमन्वितः ॥ तत्पाके भ्रातृमरणं नृपवह्निविषाद्भयम् ॥४७॥ भूमिपुत्रोऽपि नीचस्थः स्वोच्चभागसमन्वितः ॥ तत्पाके भूमिदारार्थपुत्रमित्रविवर्धनम् ॥ ४८ ॥ इति कुजदशा ॥ अथ बुधदशा ॥ अत्युच्चसोमात्मजदायकाले धनान्वितः ख्यातिमुपैति सौख्यम् ॥ ज्ञानं च कीर्तिं जननायकत्वं स्त्रीपुत्रभूम्यर्थमहोत्सवं च ॥ १ ॥ उच्चस्थितस्यापि शशांकसूनोर्दशा महत्त्वं कुरुतेऽर्थसौख्यम् ॥ देहस्य पुष्टिर्धनधान्यपुत्रगोवाजिमत्तेभमृदङ्गनादम् ॥ २ ॥ आरोहिणी सौम्यदशा प्रपन्ना यज्ञोत्सवं गोवृषवाजिसंघम् ॥ मृद्वन्नभूषांबरयानलाभं वाणिज्यभूम्यर्थपरोपकारम् ॥ ३ ॥ शशांकसूनोस्त्ववरोहिणी या दशा महत्कष्टतरं च दुःखम् ॥ विज्ञा-

नहीनं परदारसंगं नृपाग्निचोरैर्भयमत्र कष्टम् ॥ ४ ॥ नीचस्थचंद्रात्मजदायकाले ज्ञानेन हीनं स्वजनैर्वियुक्तम् ॥ पदच्युतिं बंधुविरोधता च विदेशयानं वनवासदुःखम् ॥ ५ ॥ मूलत्रिकोणान्वितसौम्यदाये राज्यं महत्सौख्यकरं च कीर्तिम् ॥ विद्याविलासं निगमार्तिशीलं पुराणधर्मश्रवणादिपूतः ॥ ६ ॥ स्वक्षेत्रगस्यापि शशांकसूनोः प्राप्तौ दशायां धनधान्यसंपत् ॥ वाणिज्यगोभूमिसुतार्थदारमृद्धन्नपानांबरभूषणाप्तिम् ॥ ७ ॥ शशांकसूनोस्त्वरिराशिगस्य शत्रोर्भयं भूपतिकोपजातम् ॥ विद्याविहीनं कुलहीनसेवा कुभोजनं दारसुतार्थनाशम् ॥ ८ ॥ शशांकसूनोरतिशत्रुराशिं गतस्य पाके विवदं च दुःखम् ॥ उद्योगभंगं स्वजनैर्विरोधं यज्ञादिविघ्नं शुभकर्मनाशम् ॥९॥ मित्रक्षेत्रदशायां शशांकसूनोर्धनायतिः सौख्यम् ॥ नामद्वयसंप्राप्तिः स्वनामांकितगद्यपद्यानि ॥ १०॥ अतिमित्रराशिगस्य दशा प्रपन्ना महत्त्वतां याति ॥ भूपतिमैत्रसौख्यं धनसुतदाराश्च बंधुसन्मानम् ॥ ११ ॥ समर्क्षगस्यापि शशांकसूनोर्दशा सुखं धान्यसुतांबराणि ॥ करोति राज्यच्युतिमत्र विघ्नं विज्ञानहीनं पिटिकादिरोगम् ॥१२॥ नीचखेचरसंयुक्तसौम्यदायेऽतिकष्टताम् ॥ पदभ्रमं बंधुनाशं कर्मनाशं मनोरुजम् ॥ १३ ॥ उच्चखेचरसंयुक्तसौम्यदाये महत्सुखम् ॥ भाग्योत्तरं सुविद्यां च वाणिज्यं गोकृषिक्रियाः ॥ १४ ॥ विदः पापान्वित-

स्यापि दाये पापमुपैति च ॥ क्षेत्रार्थदारपुत्रादिकृषिगोभूमिनाशनम् ॥ १५ ॥ विदः सौम्ययुत-
स्यापि परिपाके महत्सुखम् ॥ राज्ययोगं सुखं कीर्तिं दारपुत्रनृपात्सुखम् ॥ १६ ॥ सौम्येक्षित-
स्यापि शशांकसूनोर्दशाविपाके महतीं च कीर्तिम् ॥ विद्याविलासोद्भवराजपूज्यं कांतिप्रतापं
यशसा समेतम् ॥ १७ ॥ पापेक्षितस्यापि शशांकसूनोर्धान्यक्षयं बंधुजनैर्वियुक्तम् ॥ विदेशयानं
स्वपदच्युतिं च प्रेष्यानुवृत्त्या कलहोऽत्र कृच्छ्रम् ॥ १८ ॥ केंद्रोपगस्य हि दशा शशिनं-
दनस्य भूपालमित्रधनधान्यकलत्रपुत्रान् ॥ यज्ञादिकर्मनृपमानयशःप्रलब्धिं मृद्वन्नपानशयनां-
बरभूषणानि ॥ १९ ॥ लग्नं गतस्य हि दशा शशिनंदनस्य भूपालमानं कृषिलब्धभाग्यम् ॥
भेरीरवादिपरिघोषितयानमार्गं तीर्थाभिषेकमथवा जगति प्रसिद्धम् ॥ २० ॥ वित्तगसौम्यद-
शायां विद्याप्राप्तिं महत्प्रकीर्तिं च ॥ भूपतिभाग्यसमाना राजस्थाने प्रधानतां याति ॥ २१ ॥
तृतीयराशिस्थितचंद्रसूनोर्दशाविपाके जडतां समेति ॥ उद्वानमाजीवनगुल्मरोगमन्ना-
र्तियोगं नृपमाननं च ॥ २२ ॥ शशांकसूनोर्हिबुकस्थितस्य दशा प्रपन्ना गृहधान्यनाशम् ॥
सौख्यादिहीनं हिबुकेशमृत्युमुद्योगभंगं च पदच्युतिं वा ॥ २३ ॥ पंचमस्थशशिनंदनस्य वा
क्रूरबुद्धिरतिकष्टता भवेत् ॥ हीनवृत्तिरपि राजसेवया कृच्छ्रलब्धधनमेति संपदम् ॥ २४ ॥

षष्ठाष्टमांत्यास्थितसौम्यदाये त्वग्दोषजातं बहुरोगमेति ॥ विचर्चिका पैत्तिकपांडुरोगं नृपाग्निचोरैर्मरणं कृशत्वम् ॥ २५ ॥ देहांगवैकल्यकलत्रबंधुविद्वेषणं भूपतिदत्तकोपम् ॥ आकस्मिकं मृत्युभयं प्रमादं रिःफस्थितस्यापि शशांकसूनोः ॥ २६ ॥ दारस्थितस्यापि शशांकसूनोर्दशाविपाके सुतदारवित्तम् ॥ विद्याविनोदं विमलांबरं च नामद्वयं भूपतिमित्रतां च ॥ २७ ॥ भाग्यस्थितस्यापि शशांकसूनोर्भाग्योत्तरं दारसुतार्थलाभम् ॥ तीर्थाभिषेकं जपहोमदानं यज्ञादिकर्माणि लभेन्मनुष्यः ॥ २८ ॥ कर्मस्थितस्यापि शशांकसूनोर्दशाविपाके नृपतोल्यमेति ॥ सौख्यं स्वनामांकितगद्यपद्यं नामद्वयं दारसुतार्थलाभम् ॥ २९ ॥ प्रपूजनं देवमहीरुहाणां साम्राज्यलाभं जननायकत्वम् ॥ कवित्वमार्गं समुपैति काले यज्ञादिदीक्षां स्वजनैर्विशेषात् ॥ ३० ॥ उपांत्यराशिस्थितसौम्यदाये त्वनेकधा वित्तमुपैति काले ॥ दानेन वा भूपतिमाननाद्वा कृषेश्च वाणिज्यविचारतो वा ॥ ३१ ॥ उच्चांशसंयुक्तशशांकसूनोर्दशाविशेषे सुतभूपणाप्तिः ॥ मनोविलासं मदनाभिराममुत्साहधैर्यं च जलाभिषेकम् ॥ ३२ ॥ नीचांशकयुतः सौम्यो नीचवृत्त्यानुजीवनम् ॥ प्रेष्यत्वं परिहारं च दशायां च करोति तत् ॥ ३३ ॥ सौम्यदशायामादौ लभते धनधान्यसंपदं पुरुषः ॥ अंत्ये स्वजनविरोधं मध्ये दाये नरेशसन्मानम् ॥ ३४ ॥

अर्कगसौम्यदशायां लभते विविधापदं मनोदुःखम् ॥ स्वकुलजनृपविरोधं निंदाभयं वाक्षिकर्ण-
रोगं च ॥ ३५ ॥ स्थानवीर्ययुते सौम्ये तत्पाके कीर्तिराज्यदम् ॥ मनोधैर्यं मनोत्साहं यज्ञदी-
क्षाशुभप्रदम् ॥ ३६ ॥ तद्विहीनबुधे स्थानदारपुत्रमहद्भयम् ॥ विदेशवासं दुःख च नानापरि-
भवक्रियाः ॥ ३७ ॥ दिग्वीर्यसहिते सौम्ये दिगंताद्धनिकः सुधीः ॥ सामंतराजमित्रत्वं गंधमा-
ल्यस्य लेपनम् ॥ ३८ ॥ कालवीर्ययुतसौम्यदशायां देहसौख्यकलहादिवियोगम् ॥ दारपुत्रनृ-
पमाननमेति गांगतोयपरिपूततनुः स्यात् ॥ ३९ ॥ निसर्गवीर्यान्वितसौम्यदाये निसर्गतश्चापि
शुभादि कर्म ॥ विद्याविवादं स्वजनैर्विरोधं मातुर्वियोगं त्वथवा तदीयम् ॥ ४० ॥ वक्रचेष्टा-
न्विते सौम्ये भाग्यदारसुतार्थभाक् ॥ तथा पुराणदानादिसमुद्रस्नानमाचरेत् ॥ ४१ ॥ दृग्बलेन
युते सौम्ये सर्वभूतेषु सौम्यताम् ॥ करोति रतिकेलिं च राज्यभाग्यसमन्वितम् ॥ ४२ ॥
क्रूरषष्ट्यंशसौम्यस्य दशापाके महद्भयम् ॥ चोराग्निभूपैर्भीतिः स्याच्छुभदृग्योगवर्जिते ॥४३॥
मृद्वंशादियुते सौम्ये राज्यलाभं महत्सुखम् ॥ मार्दवं सर्वभूतेषु कृषिपुत्रार्थसंपदम् ॥ ४४ ॥
सौम्ये वैशेषिकांशस्थे विशेषाद्राजपूज्यताम् ॥ सुगंधांबरमाल्यं च विद्यागोष्ठीरहस्यताम् ॥४५॥
क्रूरद्रेष्काणसंयुक्ते चंद्रसूनुर्यदा तदा ॥ चोराग्निभूपतिभयं स्थाननाशं महद्भयम् ॥ ४६ ॥

उच्चराशिगतः सौम्यो नीचभागगतो यदि ॥ राज्यं सुखं महत्कीर्तिं विनाशयति तत्क्षणात् ॥४७॥
चंद्रात्मजोपि नीचस्थः स्वोच्चभागसमन्वितः ॥ अशुभं फलमादौ तु शुभमंते प्रयच्छति ॥ ४८ ॥
इति बुधदशा ॥ इति सर्वार्थचिंतामणौ चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥
अथ गुरुदशा ॥ गुरोर्दशायां परमोच्चगस्य राज्यं महत्सौख्यमुपैति कीर्तिम् ॥ मनोविलासं गजवाजिसंघनृपाभिषेकं स्वकुलाधिपत्यम् ॥ १ ॥ कुलीरगस्यापि गुरोर्दशायां भाग्योत्तरं भूपतिमाननाढ्या ॥ विदेशयानं महदाधिपत्यं दुःखैः परिक्लिन्नतनुर्मनुष्यः ॥ २ ॥ आरोहिणी देवगुरोर्महत्त्वं दशा प्रपन्ना कुरुतेऽर्थभूमिम् ॥ गानक्रियास्त्रीसुतराजपूज्यं स्ववीर्यतः प्राप्तयशःप्रतापम् ॥ ३ ॥ जीवदशायामारोहिण्यामीशो मंडलादिनाथो वा ॥ द्विजभूपाललब्धधनो मेधावी कांतिमान् विनीतज्ञः ॥ ४ ॥ देवेंद्रपूज्यस्य दशावरोहा करोति सौख्यं सकृदेव नाशः ॥ सकृद्यशःकांतिविशेषजालं नरेश्वरत्वं सकृदेव याति ॥ ५ ॥ अतिनीचभागभाजो गुरोर्दशायां प्रभग्नगृहपुंजः ॥ अन्योन्यहृदयवैरं कृषिनाशं याति परभृत्यः ॥ ६ ॥ मूलत्रिकोणनिलयस्य गुरोर्दशायां राज्यार्थभूमिसुतदारविशेषसौख्यम् ॥ यानाधिरोहणमपि स्वबलाप्तवित्तं यज्ञादि कर्मजनपूजितपादपीठम् ॥ ७ ॥ गुरोर्दशायां स्वगृहं गतस्य राज्ञोर्थभूधान्यसुखांबरं च ॥

मिष्टान्नदो वाजिमनोविलासं काव्यादिपुण्यागमवेदशास्त्रम् ॥ ८ ॥ गुरोर्दशायामतिशत्रुराशिं
गतस्य दुःखं समुपैति शोकम् ॥ विषादभूम्यर्थकलत्रनाशं नृपाग्निचोरैर्बहुदुःखपीडाम् ॥ ९ ॥
गुरोर्दशायामरिराशिगस्य क्षेत्रादिवित्तं शयनांबरं च ॥ नरेशसन्मानमुपैति नित्यं स्त्रीपुत्रभृत्या-
त्मसहोदरार्तिम् ॥ १० ॥ प्राप्तौ दशायामति मित्रराशिं गतस्य जीवस्य नरेंद्रपूज्यम् ॥ मृदंग-
भेरीरवयानघोषं दिगंतराक्रांतसमस्तभाग्यम् ॥ ११ ॥ मित्रर्क्षगस्यापि गुरोर्दशायां नरेशमैत्रीं
समुपैति कीर्तिम् ॥ विद्याविवादे जयमन्नसौख्यसुगंधमृद्वस्त्रपरोपकारम् ॥ १२ ॥ समर्क्षगस्यापि
गुरोर्दशायां सामान्यतो भूपतिदत्तभाग्यम् ॥ कृष्यर्थगोभूमिमनोविलासं मित्रांबरालंकृतिभूष-
णाप्तिम् ॥ १३ ॥ नीचखेचरसंयुक्तजीवदाये मनोरुजम् ॥ परप्रेष्यापवादं च पुत्राणां च विरोध-
ताम् ॥ १४ ॥ उच्चखेचरसंयुक्तगुरुदाये महत्सुखम् ॥ अनेकगोपुरादीनां निर्माणं नृपपूज्यताम्
॥ १५ ॥ पापान्वितस्यापि गुरोर्दशायां करोति पापं हृदयांतरस्थम् ॥ गूढं बहिःपुण्यफलं
विशेषाद्भूम्यर्थदारात्मजसौख्यमेति ॥ १६ ॥ शुभान्वितस्यापि गुरोर्दशायां नरेशयानं मृदुलां-
बरं च ॥ दानेन वित्तं नृपमाननाद्वा यज्ञादिसन्मार्गविशेषलाभम् ॥ १७ ॥ पापेक्षितस्यापि
गुरोर्दशायां प्राप्तं सुखं किंचिदुपैतिधैर्यम् ॥ क्वचिद्यशः कुत्रचिदाप्तसौख्यं क्वचिद्धनं नाशमुपैति

चांते ॥ १८ ॥ शुभेक्षितस्यापि गुरोर्दशायां देशांतरे वित्तमुपैति भूपात् ॥ देवार्चनं भूसुरतर्पणं च तीर्थाभिषेकं गुरुपूज्यतां च ॥ १९ ॥ केंद्रगतजीवदाये राज्यं भूदाररराजसन्मानम् ॥ विविधसुखानंदकरं बहुजनरक्षां प्रधानतां याति ॥ २० ॥ लग्नं गतस्य हि दशा पुरुषं करोति जीवस्य सौख्यममलांबरभूषणाप्तिम् ॥ यानाधिरोहणमृदंगपणारवैश्च मत्तेभवाजिभटसंघयुतं करोति ॥ २१ ॥ चतुर्थकेंद्रस्थितजीवदाये यानत्रयं भूपतिमित्रभावम् ॥ भूपालयोगे यदि भूपतित्वं नोचेत्तथा तत्सदृशं करोति ॥ २२ ॥ कलत्रराशिस्थितजीवदाये दारार्थपुत्रार्थसुखं प्रयाति ॥ विदेशयानं समरे जयं च धान्यं परब्रह्माणि पुण्यकर्म ॥ २३ ॥ कर्मस्थितस्यापि गुरोर्विपाके राज्याप्तिमाहुर्मुनयस्तदानीम् ॥ भूपालयोगे त्वथवार्थपुत्रकलत्रसत्कर्मसुराजयोगम् ॥२४॥ पंचमस्थगुरोर्दाये मंत्रोपास्तिर्महत्सुखम् ॥ सुताप्तिराजपूजां च वेदांतश्रवणादिकम् ॥ २५ ॥ त्रिकोणसंस्थस्य गुरोर्दशायां स्त्रीपुत्रधान्यार्थविवेकबुद्धिम् ॥ मृद्वन्नपानांबरपट्टवस्त्रयानादिलाभं भवनेशसौख्यम् ॥ २६ ॥ उच्चांशसंयुक्तगुरोर्दशायां भाग्योत्तरं राजसमानमेति ॥ प्रवालमुक्तामणिरत्नलाभं सर्वेषु सख्यं समुपैति सौख्यम् ॥ २७ ॥ नीचांशसंयुक्तगुरोर्विपाके भूपाद्भयं गुल्मविचार्चिकादीन् ॥ स्थानच्युतिं बंधुविरोधतां च नृपाग्निचोरैः स्वकुलोद्भवैश्च ॥ २८ ॥

अर्कगजीवदशायां सहसा ज्वरपीडितो भवेत्क्षीणः ॥ ऊर्ध्वांगरोगततो दुःशीलत्वप्रभग्नसंसारः ॥ २९ ॥ आदौ गुरुदशाकाले नृपपूज्यं महत्सुखम् ॥ मध्ये स्त्रीपुत्रलाभादि चांते कष्टं विनिर्दिशेत् ॥ ३० धनस्थितस्यापि गुरोर्विपाके धनायतिं भूपतिमाननं च ॥ विद्याविवादांकितराजगोष्ठीं सर्वोपकारं विजयं सुखं च ॥ ३१ ॥ नृपकृतबहुमानं भ्रातृभिर्भूमिलाभं परयुवतिजनैर्वा दत्तगोभूमिवित्तम् ॥ अशनवसनभूषागंधमाल्यांबराणि परकृतमुपकारं बुद्धितामेति शौर्यम् ॥ ३२ ॥ तृतीयस्थगुरोर्दाये भ्रातॄणां च सुखं धनम् ॥ नृपदत्तं धनं सौख्यं गंधमाल्यांबरादिकम् ॥ ३३ ॥ नीरोगता पुत्रकलत्रलाभं लग्नाद्रिपुस्थस्य गुरोर्दशायाम् ॥ आदौ भवेदेवमथांत्यपाके दारार्थचोरादिभयं सरोगम् ॥ ३४ ॥ जीवो मरणपदस्थः करोति सौख्यं स्वबंधुजनहानिम् ॥ स्थानच्युतिं विदेशं प्रांते स्त्रीराजपुत्रसन्मानम् ॥३५॥ लाभगजीवदशायां संप्राप्तौ राज्यलाभमुपयाति ॥ बह्वर्थदारपुत्रान् भूपविरोधं स्वबंधुविद्वेषम् ॥ ३६ ॥ व्ययगतजीवदशायां प्राप्तौ वाहनादि समुपयाति ॥ लभते विदेशयानं नानाक्लेशैश्च परिभूतः ॥ ३७ ॥ पाके स्थानबलान्वितस्य च गुरोः क्षेत्रार्थदारात्मजान्संप्राप्नोति गजाश्ववस्त्रकनकं चित्रांबरं भूषणम् ॥ दिग्वीर्यान्वितदेवनायकगुरौ लोके प्रसिद्धं तथा जीवे कालबलाधिके नृपवधूसन्मानितां याति

सः ॥ ३८ ॥ निसर्गवीर्यान्वितजीवदाये निसर्गतश्चातिसुखं महत्त्वम् ॥ विद्याविलासं रतिकेलिसौख्यं भागीरथीतोयकृताभिषेकम् ॥ ३९ ॥ वक्रं गतस्यापि गुरोर्दशायां महार्थतां याति सुतार्थदारान् ॥ युद्धे जयं भूपतिमित्रतांच सुगंधजातांबरवाग्विलासम् ॥ ४० ॥ दृग्वीर्ययुक्तस्य गुरोर्विपाके कृपाकटाक्षेण महीपतीनाम् ॥ समस्तभाग्यं समुपैति नित्यं देशांतरे भ्राम्यति किंचिदेव ॥ ४१ ॥ क्रूरषष्ट्यंशसंयुक्तगुरोर्दायेतिकष्टताम् ॥ राजकोपावमानादीन् लभते नात्र संशयः ॥ ४२ ॥ सौम्यषष्ट्यंशसंयुक्तगुरोर्दायेऽतिसौख्यताम् ॥ वाहनं बंधुसन्मानं यज्ञवैवाहिकं शुभम् ॥ ४३ ॥ पारावतांशयुक्तस्य गुरोः पाके महत्सुखम् ॥ मृद्धन्नपट्टवस्त्रं च हेमविक्रयभूषणम् ॥ ४४ ॥ पाशद्रेष्काणयुक्तस्य गुरोर्दाये च बंधनम् ॥ मृद्धन्नपट्टवस्त्रं च हेमविक्रयभूषणम् ॥ ४५ ॥ पाशद्रेष्काणयुक्तस्य गुरोर्दाये च बंधनम् ॥ कारागृहप्रवेशं च निगडं दारविग्रहम् ॥ ४६ ॥ उच्चस्थोऽपि गुरुर्नीचराश्यंशकसमन्वितः ॥ महाभाग्ये तु संप्राप्ते तत्क्षणादेव नश्यति ॥ ४७ ॥ नीचस्थो देवपूज्योऽपि स्वोच्चांशकसमन्वितः ॥ भाग्यक्षये तु संप्राप्ते भाग्यं याति तदा नरः ॥ ४८ ॥ इति गुरुदशा ॥ अथ शुक्रदशा ॥ अत्युच्चभृगुदशायां मत्तविलासप्रियार्थभोगी स्यात् ॥ माल्याच्छादनभोजनशयनस्त्रीपुत्रधनयुक्तः ॥ १ ॥ स्वोच्चस्थितस्यापि

भृगोर्दशायां स्त्रीसंगनष्टार्थविरुद्धधर्मम् ॥ पित्रोर्विनाशं समुपैति दुःखं शिरोरुजं भूपतिमाननं च ॥ २ ॥ आरोहिणी शुक्रदशां प्रपन्ना धान्यांबरालंकृतिकांतिपूज्यम् ॥ प्रवृत्तिसिद्धिं स्वजनैर्विरोधं मात्रादिनाशं परदारसंगम् ॥ ३ ॥ भृगोः सुतस्याप्यवरोहकाले प्रचंडवेश्यागमनं धनार्तिम् ॥ स्त्रीपुत्रबंध्वार्तिमनोविकारं हृच्छूलरोगं मदनार्तिमेति ॥ ४ ॥ उद्वेगरोगतप्तः कर्मसु विफलेषु सर्वदाभिरतः ॥ अतिनीचगस्य दाये शुक्रस्यात्मार्थदारपुत्रार्तिम् ॥ ५ ॥ मूलत्रिकोणभाजो भृगोर्दशायां महाधिपत्यं स्यात् ॥ क्रयविक्रयकुशलधनवान्कीर्त्यन्वितो विधिज्ञश्च ॥ ६ ॥ शुक्रक्षेत्रदशायां लभते स्त्रीपुत्रमित्रधनशौर्यम् ॥ नित्योत्साहं द्वेषं परोपकारं महत्त्वं च ॥ ७ ॥ भृगोर्दशायामतिशत्रुराशिं गतस्य पुत्रार्थकलत्रहानिम् ॥ प्रभग्नसंसारविशीर्णदेहं गुल्माक्षिरोगं ग्रहणीप्रकोपम् ॥ ८ ॥ शत्रुक्षेत्रदशायां भृगोरपत्यार्थदारहानिः स्यात् ॥ भूपतिरोषं कुरुते मत्तविलासार्थपापकर्माणि ॥ ९ ॥ मित्रक्षेत्रदशायां परोपकारी कलाविधिज्ञश्च ॥ पूगारामकृषिः स्याद्देवमनुष्यैश्चरोद्धतार्थश्च ॥१०॥ अतिमित्रशुक्रदाये भूपतिसन्मानसौख्यं च ॥ गोधनवाजिसमेतं गजगतसंघैः समस्तदोषैश्च ॥११॥ समर्क्षगस्यापि भृगोर्विपाके प्रमेहगुल्माक्षिगुदप्ररोगः॥ किंचित्सुखं भूपतिवह्निचोरैर्भयं स्वनामांकितगद्यपद्यम् ॥ १२ ॥ नीचखेचरसंयुक्तभृगोर्दाये

महद्भयम् ॥ अपवादकृतं दोषं लभते पापकर्मभिः ॥ १३ ॥ स्वोच्चस्थितेन सहितस्य भृगो-
र्विपाके राज्यं महत्त्वसमराधिपतित्वमेव ॥ हेमांबरादिमणिभूषणयानलाभं भेरीमृदंगपणवारव-
वाद्यघोषैः ॥१४॥ पापान्वितस्यापि भृगोर्दशायां स्थानच्युतिं बंधुजनैर्विरोधम् ॥ आचारहीनं
कलहप्रियत्वं कृष्यर्थभूम्यात्मजदारनाशम् ॥ १५ ॥ शुभान्वितस्यापि भृगोर्दशायां सौभाग्य-
मित्रात्मजधान्यलाभम् ॥ नरेशपूज्यं गजवाजिसंघं प्रवालमुक्तामणियानलाभम् ॥ १६ ॥ पापे-
क्षितस्यापि भृगोर्दशायां मानार्थहानिं समुपैति दुःखम् ॥ स्त्रिया विरोधं स्वपदच्युतिं च विदे-
शवासं निजकर्महीनम् ॥ १७ ॥ शुभेक्षितस्यापि भृगोर्विपाके धनांबरं भूपतिपूजनं च ॥ जना-
धिपत्यं स्वशरीरकांतिकलत्रमित्रात्मजसौख्यमेति ॥ १८ ॥ केंद्रे गतस्य हि दशाभृगुनंदस्य
यानांबरादिमणिभूषितदेहकांतिम् ॥ राज्यार्थभूमिकृषिवाहनवस्त्रशस्त्रदुर्गाधियानवनवासजला-
भिषेकम् ॥१९॥ लग्नगशुक्रदशायां संप्राप्तं राजमाननं लभते ॥ मणिगोधनकृषिलाभं परापवादं
महोत्साहम् ॥ २० ॥ चतुर्थराशिस्थितशुक्रदाये राज्यं महत्सौख्यमुपैति यानम् ॥ कृषिक्रिया-
वित्तपशुप्रजानां वृद्धिं प्रतापान्वितकीर्तिजालम् ॥ २१ ॥ कलत्रराशिस्थितशुक्रदाये कल-
त्रनाशं त्वथवा विदेशम् ॥ प्रमेहगुल्मादिशरीररोगं प्रभग्नवित्तात्मजबंधुराज्यम् ॥ २२ ॥

कर्मस्थशुक्रस्य दशाविपाके विद्याधनप्राप्तिनरेशपूज्ये ॥ भाग्योत्तरं पालितदेहकांतिं दिगंतरप्राप्तयशःप्रतापम् ॥ २३ ॥ त्रिकोणसंयुक्तभृगोर्विपाके विद्याधनप्राप्तिनरेशपूज्यम् ॥ प्रवालमुक्तामणिशंखशुक्तिगोभूमियानांबरवस्त्रलाभम् ॥ २४ ॥ पंचमस्थभृगोर्दाये पुत्रावाप्तिं विनिर्दिशेत् ॥ कीर्तिं च राजपूज्यं च सर्वेषामुपकारकम् ॥ २५ ॥ त्रिकोणस्थगतः शुक्रः करोति नृपपूज्यताम् ॥ यज्ञकर्मादिलाभं च गुरुपित्रोः सुखं यशः ॥ २६ ॥ वित्तगशुक्रदशायां धनहानिमाहुर्धनायतिं चापि ॥ अन्नसुखं वाग्विलासं परोपकारं नरेशसन्मानम् ॥ २७ ॥ तृतीयराशिस्थितशुक्रदाये धैर्यं मनोत्साहमदीनसत्वम् ॥ चित्रांबरालंकृतवाहनाप्तिं सहोदराणां बहुभाग्यलाभम् ॥ २८ ॥ भृगोर्विपाकेऽरिगतस्य नाशं धान्यार्थवह्वात्मजसोदराणाम् ॥ रोगं महत्कार्यविनाशनं च शत्रोर्भयं भूपतिवह्निचौरैः ॥ २९ ॥ रंध्रस्थितस्यापि भृगोर्विपाके शस्त्राग्निचोरक्षतमित्रविभ्रमम् ॥ क्वचित्सुखं किंचिदुपैति वित्तं क्वचिन्नरेशात्तयशःप्रतापम् ॥ ३० ॥ लाभस्थितस्यापि भृगोर्विपाके सुगंधमाल्यांबरराजपूजाम् ॥ पुत्रार्थसौख्यं कृषिविक्रयं च दानं स्वनामांकितपद्यजालम् ॥ ३१ ॥ व्ययगतशुक्रदशायां लभते धान्यार्थराजसन्मानम् ॥ स्थानच्युतिं प्रवासं मातृवियोगं मनोविलासं च ॥ ३२ ॥ जीवर्क्षगतस्य भृगोः स्त्रीपुत्रमहीनाशनं कुरुते ॥ कर्मसु नित्यो

विघ्नो जननीक्लेशान्वितो मनोदुःखी ॥ ३३ ॥ अर्कगशुक्रदशायां जीर्णगृहवासः शुभावरोधश्च ॥ लभते दारविनाशं भ्रातृवियोगं च कलहं च ॥३४॥ सिंहगशुक्रदशायां लभते विविधापदं मनोदुःखम् ॥ उद्योगरोगततः कर्मसु विफलेषु सर्वदाभिरतः ॥ ३५ ॥ शुक्रे स्थानबलाधिके नरपतेः सन्माननं भूषणं विद्यावादविवादगोष्ठिरसिकं नामद्वयं संभ्रमम् ॥ तस्मिन् दिक्प्रबलान्विते बहुयशः पुत्रार्थदारांबरं शुक्रे कालबलान्विते सुखधनं कीर्तिः स्वनामांकिता ॥ ३६ ॥ निसर्गवीर्ययुक्तस्य भृगोर्दाये महत्सुखम् ॥ कृषिगोभूमिवित्तादिभ्रातृमातृसुखंभवेत् ॥ ३७ ॥ वक्रं गतस्यापि भृगोः सुतस्य दशाविपाके त्वतिराजपूज्यम् ॥ मृदंगभेरीरवयुक्तयानं विचित्रवस्त्राभरणानि राज्यम् ॥ ३८ ॥ दृग्वीर्ययुक्तस्य भृगोर्विपाके यज्ञादिकर्माणि करोति काले ॥ विद्याविलासं शयनांबरं च नृपाभिषेकं कलहं विरोधम् ॥ ३९ ॥ क्रूरषष्ट्यंशयुक्तस्य भृगोर्दाये विपद्भयम् ॥ चोराग्निराजभीतिः स्यात्कृषिगोभूमिनाशनम् ॥४०॥ सौम्यषष्ट्यंशयुक्तस्य भृगोर्दाये महत्सुखम् ॥ कूपारामतटागानां निर्माणं देवपूजनम् ॥ ४१ ॥ वैशेषिकांशसंयुक्तभृगोर्दाये महत्सुखम् ॥ वाहनं भूपसन्मानं भ्रातृस्त्रीधनसंपदः ॥ ४२ ॥ क्रूरद्रेष्काणसंयुक्ते भृगोर्दायेऽरिभीतिदम् ॥ कारागृहमहत्कष्टमनलं चोरपीडनम् ॥ ४३ ॥ उच्चक्षेत्रेऽपि नीचांशयुक्तः शुक्रोऽ-

तिकष्टदः ॥ करोति राज्यनाशं च स्थाननाशमथापि वा ॥ ४४ ॥ उच्चांशयुक्तशुक्रोऽपि नीच-
राशिसमन्वितः ॥ कृषिगोभूमिवाणिज्यं धनधान्यविवर्धनम् ॥ ४५ ॥ इति शुक्रदशा ॥ अथ
शनिदशा ॥ मंदात्युच्चदशायां ग्रामसभामंडलाधिपत्यं स्यात् ॥ लभते विनोदशीलं पितृनाशं
बंधुकलहं च ॥ १ ॥ स्वोच्चदशायां कुरुते देशभ्रंशं मनोरुजं दुःखम् ॥ वाणिज्यहानिसत्वं कृषि-
हानिं नृपविरोधं च ॥ २ ॥ आरोहिणी वासरनाथसूनोर्दशाविपाके नृपलब्धभाग्यम् ॥ वाणि-
ज्यलाभं कृषिभूमिलाभं गोवाजियानं सुतदारलाभम् ॥ ३ ॥ दिनेशसूनोस्त्ववरोहकाले राज्य-
च्युतिं दारसुतार्थनाशम् ॥ भाग्यक्षयं भूपतिकोपयुक्तं प्रेष्यत्वमायाति गुदाक्षिरोगम् ॥ ४ ॥
नीचस्थितस्यापि दिनेशसूनोर्दाये कलत्रात्मजसोदराणाम् ॥ नाशं महत्कष्टतरां कृषिं च नीचा-
नुवृत्त्या समुपैति वृत्तिम् ॥ ५ ॥ मूलत्रिकोणनिलयस्य शनेर्दशायां देशांतरादिवनवासमुपैति
काले ॥ नामद्वयं यदि सभानगराधिपत्यं विद्वेषणं सुतकलत्रधनादिभिर्वा ॥ ६ ॥ स्वक्षेत्रगस्य
च दशा दिवसेशसूनोर्द्वेषं करोति बलपौरुषकीर्तिजालम् ॥ राजाश्रयं कनकभूषणभूमिलाभं
धैर्यं स्वनामसदृशानुगुणं च सौख्यम् ॥ ७ ॥ शनेर्दशायामतिशत्रुगस्य स्थानच्युतिं बंधुविरो-
धतां च ॥ चोरादिभूपैर्भयमत्र विघ्नो भृत्यार्थदारात्मजकोपमेति ॥ ८ ॥ दिनेशसूनोस्त्वरिरा-

शिगस्य वैश्याद्धनं प्राप्यतिभूमिनाशम् ॥ कृषेर्विनाशं स्वपदच्युतिं च वैरं समायाति शरीरकृ-
च्छ्रम् ॥ ९ ॥ मित्रक्षेत्रदशायां मंदस्य तु शिल्पकर्मगुणवेत्ता ॥ ज्ञानबलं प्रतापं ददाति दुःखं
महत्त्वं च ॥ १० ॥ अधिमित्रमंददाये ददाति सौख्यं नरेशसन्मानम् ॥ सुतधनदारविशेषात्
पशुकृषिमहिषादिवाणिज्यम् ॥ ११ ॥ समर्क्षगस्यापि शनेर्दशायां समानबुद्धिः सुतदारमित्रे ॥
भृत्यापदं बंधुजनेषु वैरं देहस्य कष्टं क्षयवातपित्तैः ॥ १२ ॥ नीचखेचरसंयुक्तशनेर्दाये महद्भ-
यम् ॥ विप्रलंभोपवासश्च नीचवृत्त्यानुजीवनम् ॥ १३ ॥ स्वोच्चखेचरसंयुक्तशनेर्दाये महत्सुखम् ॥
किंचिद्राज्यं कृषेर्लाभं भृत्यवर्गार्थनाशनम् ॥ १४ ॥ पापान्वितस्यापि शनेर्दशायां पापानि
गूढानि करोति काले ॥ नीचस्त्रिया संगमनं विशेषाच्चोरादिनीचैः कलहं विदारम् ॥ १५ ॥
शुभान्वितस्यापि शनेर्दशायां विशेषतो ज्ञानमुपैति काले ॥ परोपकारं नृपलब्धभाग्यं कृष्णानि
धान्यान्ययसश्च लाभम् ॥ १६ ॥ पापेक्षितस्यापि शनेर्दशायां भृत्यार्थदारात्मजसोदराणाम् ॥
नाशं समायाति परापवादं कुभोजनं कुत्सितगंधमाल्यम् ॥ १७ ॥ शुभेक्षितस्यापि शनेर्दशायां
स्त्रीपुत्रभृत्यार्थमुपैति काले ॥ पश्चादुपैत्यत्र महत्वकष्टं गोभूमिवाणिज्यकृषेर्विनाशम् ॥ १८ ॥
केंद्रान्वितशनेर्दाये कलहायासपीडनम् ॥ पुत्रमित्रार्थदारादिबंधूनां मरणं ध्रुवम् ॥ १९ ॥ लग्न-

 

गतशनेर्दाये देहकृच्छ्रमुपैति च ॥ स्थानच्युतिं प्रवासं च राजकोपं शिरोरुजम् ॥ २० ॥ चतुर्थस्थशनेर्दाये मातृतद्वर्गनाशनम् ॥ गृहदाहं पदभ्रंशं चोरार्तिं नृपपीडनम् ॥ २१ ॥ दारराशिगतस्यापि शनेर्दायेऽरिपीडनम् ॥ मूत्रकृच्छ्रं महाद्वेषं स्त्रीहेतोर्मरणं तु वा ॥ २२ ॥ दशमस्थशनेर्दाये कर्मनाशमुपैति च ॥ देशांतरं पदभ्रंशनिगडं राजपीडनम् ॥ २३ ॥ द्वितीयस्थशनेर्दाये वित्तनाशमथाक्षिरुक् ॥ राजकोपं मनस्तापमन्नद्वेषं मनोरुजम् ॥ २४ ॥ तृतीयस्थशनेर्दाये कृषिगोधनसंपदः ॥ मनोजाड्यं मनोत्साहं भ्रातृतद्वर्गनाशनम् ॥ २५ ॥ पंचमस्थशनेर्दाये पुत्रनाशं मनोरुजम् ॥ राजकोपं भृत्यनाशं बंधुस्त्रीवित्तविभ्रमम् ॥ २६ ॥ षष्ठस्थरविसूनोस्तु दशाकालेऽरिपीडनम् ॥ व्याधिचोरविषैर्बाधां ग्रहक्षेत्रविनाशनम् ॥ २७ ॥ मरणपदस्थो मंदः करोति नित्यं सुतार्थदाराणाम् ॥ नाशं भृत्यजनानां गोमहिषभूमिदारनाशं च ॥ २८ ॥ नवमगतमंददाये पित्रोर्नाशं गुरोस्तथैवापि ॥ लभते विदेशयानं स्वकुलजातैर्विनाशमुपयाति ॥२९॥ लाभगमंददशायां लभते विविधार्थसौख्यसन्मानम् ॥ सुतदारभृत्यसौख्यं मनोविलासं कृषेश्च लब्धधनम् ॥३०॥ व्ययगतमंददशायां भीतिं चोराग्निभूपसंघैश्च ॥ विविधापदं च दुःखं विदेशयानं स्वबंधुनाशं च ॥ ३१ ॥ अर्कगमंददशायां स्वजनद्वेषं परस्त्रियं लभते ॥ भृत्यापत्यविरोधं

महोद्यमं दोषपरिभूतम् ॥ ३२ ॥ नीचांशमंददाये नीचाचारेण जीवनं लभते ॥ सर्वेषां प्रेष्यत्वं
धनसुतदारैश्च विग्रहं दुःखम् ॥ ३३ ॥ उच्चांशमंददाये विविधसुखानंदभोगभाग्यादीन् ॥ कुरुते
विदेशयानं ग्रामसभामंडलाधिपत्यं वा ॥ ३४ ॥ आदौ मंददशायामतिदुःखं मातृनाशनं कुरुते ॥
मध्ये विदेशयानं परगृहवासं परान्नभुक् चांते ॥ ३५ ॥ स्थानवीर्ययुतमंददशायां दारपुत्रधन-
कीर्तिमुपैति ॥ चोरशत्रुनृपवह्निभयं वा बंधुनाशमथवाक्षिरुदार्तिम् ॥ ३६ ॥ मंदस्य दिग्वीर्य-
युतस्य दाये दिगंतरादाप्तसुखार्थकीर्तिम् ॥ भूगूढदारात्मजसोदराणां विनाशनं बंधुजनैर्विरो-
धम् ॥ ३७ ॥ कालवीर्ययुतमंददशायां कालकूटविषभीतिमुपैति ॥ दारपुत्रनृपचोरभयं वा
धान्यभूमिकृषिवाहनलाभम् ॥ ३८ ॥ वक्रचारयुतो मंदः करोति विफलां क्रियाम् ॥ उद्योगभं-
गदुःखं च सोदराणां च नाशनम् ॥३९॥ क्रूरषष्ट्यंशसंयुक्तशनिदाये महद्भयम् ॥ नृपकोपं पद-
भ्रंशं कारागृहनिवेशनम् ॥४०॥ सौम्यं षष्ट्यंशसंयुक्तशनिदाये महत्सुखम् ॥ दारपुत्रार्थसंपत्तिं
लभते बंधुविग्रहम् ॥ ४१ ॥ वैशेषिकांशसंयुक्तः शनिः सौख्यं करोति च ॥ विशेषाद्राजसन्मानं
विचित्रांबरभूषणम् ॥४२॥ क्रूरद्रेष्काणसंयुक्तशनिदाये महद्भयम् ॥ उद्बंधनं विषाद्भीतिं नृपचो-
राग्निजं भयम् ॥ ४३ ॥ नीचराशिगतो मंदः स्वोच्चांशकसमन्वितः ॥ दशादौ दुःखमापाद्य

दशांते कष्टदो भवेत् ॥ ४४ ॥ उच्चराशिगतो मंदो नीचांशकसमन्वितः ॥ दशादौ सुखमापाद्य दशांते कष्टदो भवेत् ॥ ४५ ॥ इति सर्वार्थचिंतामणौ शनिफलं पंचदशोऽध्यायः ॥ १५ ॥

अथ राहुदशाफलम् ॥ राहोर्वृषोच्चकेतोस्तु वृश्चिके तुंगसंज्ञितम् ॥ मूलत्रिकोणं कुंभं च क्रियं मित्रभमुच्यते ॥ १ ॥ एतत्सप्तमराशिस्तु केतोर्मूलत्रिकोणभम् ॥ षष्ठाष्टरिःफगो राहुस्तद्दाये कष्टदो भवेत् ॥ २ ॥ उच्चस्थः सैंहिकेयस्तु तत्पाके सुखदो भवेत् ॥ राज्यं करोति मित्रार्तिं धनधान्याभिवर्धनम् ॥ ३ ॥ राहुर्नीचस्थितो दाये चोराग्निनृपभीतिदः ॥ उद्बंधनं विषाद्भीतिं कुरुते सिंहिकासुतः ॥ ४ ॥ राहोर्दशायाः संप्राप्तौ नृपचोराग्निपीडनम् ॥ विदेशयानं दुःखार्तिं वनवासाद्भयं ध्रुवम् ॥५॥ लग्नगतराहुदाये बुद्धिविहीनं विषाग्निशस्त्राद्यैः ॥ बंधुविनाशं लभते दुःखार्तिं च पराजयं समरे ॥ ६ ॥ राहोर्दशायां धनराशिगस्य राज्यं च वित्तं हरते विशेषात् ॥ कुभोजनं कुत्सितराजसेवा मनोविकारं त्वनृतं प्रकोपम् ॥७॥ तृतीयराशिस्थितराहुकाले पुत्रार्थदारात्मजसोदराणाम् ॥ सुखं कृषेर्बंधनमाधिपत्यं विदेशयानं नरपालपूज्यम् ॥८॥ चतुर्थराशिस्थितराहुकाले मातुर्विनाशं त्वथवा तदीयम् ॥ क्षेत्रार्थनाशं नृपतेः प्रकोपं भार्यादिपातित्यमनेकदुःखम् ॥९॥ चोराग्निबंधार्तिमनोविकारं दारात्मजानामपि रोगपीडा ॥ चतु-

॥८०॥

थराशिस्थितराहुकाले प्रभग्नसंसारकलत्रपुत्रम् ॥ १० ॥ बुद्धिभ्रमं भोजनसौख्यनाशं विद्याविवादं कलहं च दुःखम् ॥ कोपं नरेंद्रस्य सुतस्य नाशं राहोः सुतस्थस्य दशाविपाके ॥ ११ ॥ दशाविपाके त्वरिराशिगस्य चोराग्निभूपैर्भयमातनाशम् ॥ प्रमेहगुल्मक्षयपित्तरोगं त्वग्दोषरोगं त्वथवा मृतिं च ॥ १२ ॥ कलत्रराशिस्थितराहुदाये कलत्रनाशं समुपैति शीघ्रम् ॥ विदेशयानं कृषिभाग्यहानिं सर्पाद्भयं मृत्युसुतार्थनाशम् ॥ १३ ॥ राहोर्दशायां निधनस्थितस्य यमालयं याति सुतार्थनाशम् ॥ चोराग्निभूपैः स्वकुलोद्भवैश्च भयं मृगैर्वा वनवासदुःखम् ॥ १४ ॥ राहो-र्दशायां नवमस्थितस्य पित्रोर्विनाशं लभते मनुष्यः ॥ विदेशयानं गुरुबंधुनाशं स्नानं समुद्रस्य सुतार्थनाशम् ॥ १५ ॥ मानस्थितस्यापि दशाविपाके राहोः प्रवृत्तिं लभते मनुष्यः ॥ पुराण-धर्मश्रवणादिभिश्च गांगेयतोयैरपि शुद्धदेहः ॥ १६ ॥ सौम्यर्क्षगश्चेत्फलमेव मेव पापर्क्षगश्चेन्न तथाभवेद्धि ॥ प्रोक्तं फलं यत्सकलं तदेव सौम्यर्क्षगश्चेत्फलमन्यथान्यत् ॥ १७ ॥ पापक्षेत्रगतो राहुः कर्मस्थः पापसंयुतः ॥ अभिशस्तस्तदा काले पुत्रदाराग्निपीडनम् ॥ १८ ॥ आयराशि-गतो राहुस्तत्पाके नृपमाननम् ॥ धनाप्तिं दारलाभं च गृहक्षेत्रादिसंपदः ॥ १९ ॥ व्ययगतरा-हुदशायां देशभ्रंशं मनोरुजं कुरुते ॥ विच्छिन्नदारपुत्रं कृषिपशुधनधान्यसंपदानाशम् ॥ २० ॥

कुलीरगोमेषयुतस्य राहोर्दशाविपाके धनलाभमेति ॥ विद्याविनोदं नृपमाननं च कलत्रभृत्या-
त्मसुखं प्रयाति ॥ २१ ॥ पाथोनमीनाश्वयुतस्य राहोर्दशाविपाके सुतदारलाभम् ॥ देशाधि-
पत्यं नरवाहनं च दशावसाने सकलं विनाशम् ॥ २२ ॥ पापर्क्षसंयुक्तफणींद्रदाये देहस्य कार्श्यं
स्वकुलस्य नाशम् ॥ भूपाद्भयं वंचनतोऽरिभीतिः प्रमेहकासक्षयमूत्रकृच्छ्रम् ॥ २३ ॥ शुभदृष्टि-
युतो राहुः करोति सफलक्रियाम् ॥ राजमाननमर्थाप्तिं बंधूनां मरणं ध्रुवम् ॥२४॥ पापदृष्टियुतो
राहुः कर्मनाशं करोति च ॥ उद्योगभंगं देहार्तिं चोराग्निनृपपीडनम् ॥ २५ ॥ उच्चग्रहयुतो राहू
राज्यलाभं करोति च ॥ स्त्रीपुत्रधनसंपत्तिवस्त्राभरणलेपनम् ॥ २६ ॥ नीचग्रहयुतो राहुर्नीच-
वृत्त्यानुजीवनम् ॥ कुभोजनं कुदारं च कुपुत्रं लभते तदा ॥ २७ ॥ दशादौ दुःखमाप्नोति
दशामध्ये सुखं यशः ॥ दशांते स्थाननाशं च गुरुपुत्रादिनाशनम् ॥ २८ ॥ इति राहुदशा ॥
अथ केतुदशाफलम् ॥ भार्यापुत्रविनाशनं नरपतेर्भीतिं महत्कष्टतां विद्याबंधुधनाप्तिमित्ररहितं
रोगाग्निमित्रैर्भयम् ॥ यानारोहणपातनं विषजलैः शस्त्रादिभिर्वा भयं देशाद्देशविवासनं कलि-
रुचिं पण्यादिभिर्वा भयम् ॥ १ ॥ केतोर्दशायां संप्राप्तौ दारपुत्रविनाशनम् ॥ राजकोपं मन-
स्तापं चोराग्निकृषिनाशनम् ॥ २ ॥ केंद्रस्थस्य दशा केतोः करोति विफलक्रियाम् ॥ राज्यार्थ-

सुतदाराणां नाशनं विपदं तथा ॥३॥ लग्नकेंद्रगतस्यापि केतोर्दाये महद्भयम् ॥ ज्वरातिसारमेहं
च स्थानहानिं विषूचिकाम् ॥ ४ ॥ धनराशिगतस्यापि केतोर्दाये धनक्षयम् ॥ वाक्पारुष्यं
मनोदुःखं कुत्सितान्नं मनोरुजम् ॥ ५ ॥ तृतीयराशिगस्यापि केतोर्दाये महत्सुखम् ॥ मनोवै-
कल्यमायाति भ्रातृभिर्द्वेषणं परम् ॥ ६ ॥ चतुर्थराशिगस्यापि केतोर्दाये सुखक्षयम् ॥ प्रभग्न-
दारपुत्रादिगृहो धान्यप्रहर्षितः ॥ ७ ॥ पंचगस्थस्य केतोस्तु दशाकाले सुतक्षयम् ॥ बुद्धिभ्रमं
विशेषेण राजकोपं धनक्षयम् ॥ ८ ॥ केतोस्त्वरिगतस्यापि दशाकाले महद्भयम् ॥ चोराग्निवि-
षभीतिः स्याद्दशार्तिं समुपैति च ॥ ९ ॥ कलत्रराशिसंयुक्तकेतोर्दाये महद्भयम् ॥ दारपुत्रार्थ-
नाशं च मूत्रकृच्छ्रं मनोरुजम् ॥ १० ॥ केतोरष्टमयुक्तस्य दशाकाले महद्भयम् ॥ पितृमृत्यु-
श्वासकासग्रहण्यादिक्षयान्वितः ॥ ११ ॥ नवमस्थस्य केतोस्तु दशापाके पितुर्विपत् ॥ गुरोर्वा
विपदं दुःखं शुभकर्मविनाशनम् ॥ १२ ॥ कर्मस्थकेतोः संप्राप्तौ दशायां सुखमेति च ॥ मान-
हानिं मनोजाड्यमपकीर्तिं मनोरुजम् ॥ १३ ॥ लाभस्थकेतोः संप्राप्तौ दाये सौख्यं करोति च ॥
भ्रातृवर्गादिसौख्यं च यज्ञदारादिवर्धनम् ॥ १४ ॥ रिःफस्थकेतोः संप्राप्तौ दाये कष्टतरं भवेत् ॥
स्थानच्युतिं प्रवासं च राजपीडाक्षिनाशनम् ॥ १५ ॥ दशादौ सुखमाप्नोति दशामध्ये महद्भ-

यम् ॥ दशांते राजभीतिश्च देहजाड्यमथापि वा ॥ १६ ॥ शुभवीक्षणसंयुक्तः केतुः सौख्यं करोति च ॥ राज्यार्थं गृहशांतिं च राजपूजां महाद्दृढम् ॥ १७ ॥ पापेक्षितयुतो वापि केतुर्दुःखं करोति च ॥ ज्वरातिसारमेहांश्च त्वग्दोषं राजपीडनम् ॥ १८ ॥ इति केतुदशा ॥ अथांतर्दशाफलानि ॥ तेजस्विनमतिसुखिनं सुस्थिरविभवं नृपाच्च लब्धधनम् ॥ स्वनवांशकबलयुक्तः पुरुषं कुर्याद्धनान्वितं ख्यातम् ॥ १ ॥ शुभदर्शनफलयुक्तः पुरुषं कुर्याद्धनान्वितं ख्यातम् ॥ सुभगप्रयासममलं सुरूपदेहं सुसौम्यं च ॥ २ ॥ अन्योन्यषष्ठाष्टमदायकाले नृपाद्भयं भृत्यजनैर्विरोधम् ॥ स्त्रिया विरोधं सुतदारनाशं चोराग्निबंध्वार्तिमनोविकारम् ॥ ३ ॥ पाकेश्वरादंत्यगतस्य भुक्तौ स्थानच्युतिं बंधुजनैर्विरोधम् ॥ विदेशयानं स्वजनैर्विरोधं पादाक्षिहृद्रोगमुपैति काले ॥ ४ ॥ दशाधिपेनापि युतस्य भुक्तौ स्त्रीपुत्रभृत्यार्थकृषेर्विनाशम् ॥ उद्योगभंगं स्वजनैर्विकष्टमाकस्मिकं दूषणमेति काले ॥ ५ ॥ दशाधिपाद्वित्तगतस्य भुक्तौ मृद्धन्नपानांबरगंधमाल्यम् ॥ परोपकारं स्वजनस्य सख्यं स्त्रीपुत्रबंध्वात्ममनोविलासम् ॥ ६ ॥ दशाधिपात्सोदरराशिगस्य भुक्तौ नृपाद्वित्तमुपैति सख्यम् ॥ सुगंधमाल्यांबरभूषणं च सुहृद्भवं भोजनसौख्यपुष्टिम् ॥ ७ ॥ दायेश्वरादंबुगतस्य भुक्तौ दारात्मजार्थग्रहधर्मयानम् ॥ मिष्टान्नपानांबरभूषणं

च शुभग्रहश्चेत्फलमन्यथान्यत् ॥ ८ ॥ पापग्रहोऽपि शुभदः खलुदायनाथाद्बंधुस्थितस्वभवनो-च्चबलादियुक्तः ॥ सौम्ये ग्रहोप्यशुभदः सुखराशियुक्तो दायेश्वरात्स्वभवनोच्चबलादिहीनः ॥९॥ दशानाथात्सुतस्थस्य भुक्तौ पुत्राप्तिमादिशेत् ॥ शुभग्रहस्य सौख्यं च पापभुक्तौ सुतक्षयम् ॥ १० ॥ अंतर्दशायां पापस्य षष्ठस्थस्य दशेश्वरात् ॥ चोरादिऋणदेहार्तिं लभते पदविभ्र-मम् ॥ ११ ॥ तस्मात्षष्ठस्य सौम्यस्य दशेशात्सुखवर्धनम् ॥ लभते पुत्रमित्रार्तिं स्वोच्चमूलादि-गस्य तु ॥ १२ ॥ दायेशात्सप्तमस्थस्य पापस्यापह्वतौ तथा ॥ दारार्थपुत्रबंधूनां नाशं भूपति-तो भयम् ॥ १३ ॥ सप्तमस्थशुभस्यापि ह्वतौ सौख्यं दशाधिपात् ॥ नीचशत्रुविहीनस्य सद्रत्नांबरभूषणम् ॥ १४ ॥ पाकेशादष्टमस्थस्य पापस्यापह्वतौ भयम् ॥ निधनं कुत्सितान्नं च चोराग्निनृपपीडनम् ॥ १५ ॥ पाकेशादष्टमस्थस्य सौम्यस्यापह्वतौ सुखम् ॥ भुक्त्यादौ शोभनं प्रोक्तमंते कष्टं विनिर्दिशेत् ॥ १६ ॥ दायेशान्नवमस्थस्य पापस्यापह्वतौ यथा ॥ अशुभं लभते कर्म स्थानभ्रंशं मनोरुजम् ॥ १७ ॥ प्रधानतः शुभस्थस्य सौम्यस्यापह्वतौ यदा ॥ विवाहं यज्ञदीक्षां च दानार्तिं लभते नरः ॥ १८ ॥ कर्मस्थपापखेटस्य ह्वतौ पाकेश्वराद्यदा ॥ कर्मना-शमवाप्नोति दुष्कीर्तिं विविधापदम् ॥ १९ ॥ तस्मात् कर्मस्थसौम्यस्य ह्वतौ सौख्यं विनिर्दि-

शेत् ॥ तटाकगोपुरादीनां पुण्यकर्मादिसंग्रहम् ॥ २० ॥ लाभस्थस्य दशानाथात्पापस्यापहृतौ धनम् ॥ लभते पुत्रमित्रार्थस्थानप्राप्तिं च शाश्वतीम् ॥ २१ ॥ पाकेशाल्लाभयुक्तस्य सौम्यस्यापहृतौ सुखम् ॥ भाग्योत्तरं नृपात्प्रीतिं दारपुत्रादिवर्धनम् ॥ २२ ॥ व्ययस्थस्य हृतौ दुःखं पापस्य तु दशाधिपात् ॥ अर्थनाशं नृपात्क्रोधं स्थाननाशं स्मृतिभ्रमम् ॥ २३ ॥ पाकेश्वराद्व्ययस्थस्य सौम्यस्यापहृतौ यदा ॥ वाहनं भोगभाग्यं च वस्त्राभरणभूषणम् ॥ २४ ॥ तत्तद्दशायां संयोज्यमेवमेवं विशेषतः ॥ स्वर्क्षोच्चवर्गमित्रादि विना सर्वत्र कल्पयेत् ॥ २५ ॥ लग्नार्थसोत्थगस्यापि पापस्यापहृतौ तदा ॥ पाकेशाद्दुःखमाप्नोति सौम्यभुक्तौ शुभं भवेत् ॥ २६ ॥ अंतर्दशायां क्रूरस्य क्रूरदाये महद्भयम् ॥ स्थानाक्षिबंधुपुत्रार्थदारनाशं नृपाद्भयम् ॥ २७ ॥ शुभभुक्तौ शुभदाये स्थानवाहनभूषणम् ॥ सौम्यभुक्तौ पापदाये त्वादौ कष्टं ततः शुभम् ॥ २८ ॥ सौम्यदाये पापभुक्तौ त्वादौ कष्टं ततः शुभम् ॥ शीर्षोदयर्क्षगाः खेटास्त्वादौ चांतेऽन्यऋक्षगाः ॥ २९ ॥ यत्र संवादबाहुल्यं योजयित्वा फलं वदेत् ॥ अपि संवादकार्येषु यथोक्तं फलमादिशेत् ॥ ३० ॥ इति सामुदायिकांतर्दशाफलम् ॥ अथ ग्रहाणां लग्नादिस्थितभेदेन पुनरप्यंतर्दशाफलविशेषमाह ॥ लग्नगस्य रवेः पाके भौमार्किशिखिभोगिनाम् ॥ अंतर्दशायां

दुःखं च राज्यार्थगृहनाशनम् ॥ १ ॥ तेषामगोचरस्थानां दिनेशात्फलमीदृशम् ॥ गोचरस्थे फलं सौख्यं सर्वस्मिन् पाकपाद्ग्रहे ॥ २ ॥ गोचरत्वं नाम ॥ स्वर्क्षतुंगत्रिकोणस्थः षडष्टांत्यविवार्जितः ॥ अनस्तगो मित्रगस्तु गोचरस्थो भवेद्ग्रहः ॥ ३ ॥ अस्तगो नीचगो वापि स्वर्क्षमूलविवर्जितः ॥ षष्ठाष्टमव्ययस्थो वा यः खेटोयमगोचरः ॥ ४ ॥ लग्नस्थवासरेशस्य दशायामिज्यशुक्रयोः ॥ शशांकसौम्ययोर्भुक्तौ कृषिगोसुतदारभूः ॥ ५ ॥ धनस्थवासरेशस्य पापभुक्तौ धनक्षयम् ॥ वाक्पारुष्यं मनोदुःखं नेत्ररोगं महद्भयम् ॥ ६ ॥ सौम्यभुक्तौ रवेः पाके धनस्थस्य महत्सुखम् ॥ विद्यालाभं नृपात्प्रीतिं वस्त्रवाहनभूषणम् ॥ ७ ॥ तृतीयस्थस्य तु रवेः पाके पापहृतौ यदा ॥ गोचरस्थे महत्सौख्यं नोचेत्पापफलं वदेत् ॥ ८ ॥ तत्रस्थभानुपाके च शुभभुक्तौ महत्सुखम् ॥ धैर्यं वित्तं सुताप्तिं च समरे जयमाप्नुयात् ॥ ९ ॥ दिनेशस्य सुखस्थस्य दशायां पापिनां हृतौ ॥ मातृनाशं मनोदुःखं चोराग्निनृपपीडनम् ॥ १० ॥ रवेः सुखस्थितस्यापि शुभभुक्तौ महत्सुखम् ॥ राज्यार्थपुत्रदारादिवस्त्रमाल्यानुलेपनम् ॥ ११ ॥ पंचमस्थरवेः पाके शन्यारशिखिभोगिनाम् ॥ अंतर्दशायां पुत्रार्तिं चोरभूपाग्निपीडनम् ॥ १२ ॥ शुभग्रहाणां भुक्तौ च रवेः पंचमगस्य तु ॥ परिपाके सुताप्तिं च राज्यवाहनभूषणम् ॥ १३ ॥ षष्ठस्थसूर्यदा-

येऽस्मिन्नपहारे तु पापिनाम् ॥ ऋणचोराग्निभूपैस्तु भीतिरावश्यकी तथा ॥ १४ ॥ सौम्याना-
मपहारे तु भास्करस्यारिगस्य च ॥ परिपाके सुखं पूर्वं पश्चात्कष्टं विनिर्दिशेत् ॥ १५ ॥
सप्तमस्थरवेः पाके शुक्रेज्याब्जविदां हृतौ ॥ दारलाभं मनोत्साहं यानांबरविभूषणम् ॥ १६ ॥
तथाविधरवेः पाके दुःखं स्यात्पापिनां हृतौ ॥ ज्वरातिसारपित्तं च मेहकृच्छ्रारिपीडनम् ॥१७॥
अष्टमस्थरवेः पाके शुभे भुक्तौ शुभं वदेत् ॥ किंचिद्दुःखं शुभाधिक्यं शयनांबरभूषणम् ॥१८॥
तथाविधरवेर्दाये पापभुक्तौ महद्भयम् ॥ मरणं व्याधिपीडा वा परप्रेष्यत्वमेव वा ॥ १९ ॥ शुभ-
स्थानगतस्यापि रवेः पाके हृतौ यदा ॥ सौम्यानां शुभकर्माप्तिं दानयज्ञं महोत्सवम् ॥ २० ॥
नवमस्थरवेः पाके पापभुक्तौ यदा तदा ॥ करोति दुःखबाहुल्यं गुरुपित्रादिनाशनम् ॥ २१ ॥
कर्मस्थरविदाये तु पापभुक्तिर्यदा तदा ॥ करोति कर्मकोशार्तिं चोराग्निनृपपीडनम् ॥ २२ ॥
तथाविधरवेः पाके शुभभुक्तिर्यदा तदा ॥ करोति विपुलं राज्यं कीर्तिंश्चाचंद्रतारकम् ॥ २३ ॥
लाभराशिगतस्यापि रवेः पाके शुभेतरा ॥ भुक्तिर्यदा तदा दुःखं पश्चात्सौख्यं करोति च ॥
॥२४॥तथाविधरवेः पाके शुभभुक्तिर्यदा तदा ॥ धनाप्तिं राजसन्मानं दारपुत्रनृपात्प्रियम् ॥२५॥
द्वादशस्थरवेः पाके पापभुक्तौ महद्भयम् ॥ स्थानच्युतिं प्रवासं च नृपकोपाद्विमानताम् ॥२६॥

तथाविधरवेः पाके शुभभुक्तौ महत्सुखम् ॥ गोभूमिवस्त्रधान्यादिमणिविद्रुमभूषणम् ॥ २७ ॥
इति रविपाकांतरदशाफलम् ॥ अथ चंद्रदशायामंतर्दशामाह ॥ मूर्तिस्थचंद्रदाये तु शुक्रेज्या-
ब्जविदां हतौ ॥ देहारोग्यं नृपात्प्रीतिं वाहनांबरभूषणम् ॥ १ ॥ तथाविधस्य चाब्जस्य परिपा-
के शुभेतरा ॥ हृतिः करोति दुःखं च कृषिगोभूमिनाशनम् ॥२॥ द्वितीयस्थनिशानाथपरिपाके
शुभेतरा ॥ कलत्रपुत्रबंधूनां नृपाद्भीतिं करोति च ॥ ३ ॥ सौम्याहतौ द्वितीयस्थचंद्रदाये
महत्सुखम् ॥ भोजनांबरपानं च मनोत्साहं करोति हि ॥ ४ ॥ तृतीयस्थनिशानाथपरिपाके
महत्सुखम् ॥ शुभग्रहाणां भुक्तिस्तु करोति नृपमानताम् ॥ ५ ॥ तथाविधनिशानाथपरिपाके
शुभेतरा ॥ हृतिः करोति वैकल्यं भ्रातृधैर्यविनाशनम् ॥ ६ ॥ चतुर्थस्थनिशानाथपरिपाके
महत्सुखम् ॥ शुभभुक्तौ नृपात्प्रीतिर्जायते विविधं सुखम् ॥ ७ ॥ पापभुक्तौ महत्कष्टं गृहदारा-
र्थनाशनम् ॥ चोराग्निनृपभीतिं च तादृगब्जदशांतरे ॥ ८ ॥ पंचमस्थनिशानाथपरिपाके
महत्सुखम् ॥ सौम्यभुक्तौ कलत्रार्थपुत्रमित्रांबराणि च ॥ ९ ॥ तथाविधनिशानाथदाये पापहृ-
तौ यदा ॥ बुद्धिक्षोभं मनस्तापं पुत्रदारनृपाद्भयम् ॥ १० ॥ कृषिनाशमृणग्रस्तं षष्ठस्थितनि-
शाकरात् ॥ स्यात् पापिनां हृतौ दुःखं प्रमेहक्षयपांडुभिः ॥ ११ ॥ रिपुस्थितदशानाथात्सौ-

स. चिं. म्यानां तु यदा हृतिः ॥ करोति सर्वतो मैत्रीं चोराग्निभयनाशनम् ॥ १२ ॥ कलत्रस्थनिशा- अ०
॥८५॥ नाथाद्यदा सौम्याहृतिस्तदा ॥ कलत्रपुत्रसंपत्तिं वाहनांबरभूषणम् ॥ १३ ॥ तथाविधदशाना- १६
थात्पापिनां तु हृतिर्यदा ॥ विदेशयानं पुत्रार्थदारबंधुविनाशनम् ॥ १४ ॥ अष्टमस्थनिशाना-
थात् पापभुक्तौ महद्भयम् ॥ मरणं दारपुत्राणां कुत्सितान्नं पराजयम् ॥ १५ ॥ रंध्रस्थितनि-
शानाथपरिपाके महत्सुखम् ॥ सौम्यभुक्तौ महाकीर्तिर्धैर्यवाहनभूषणम् ॥ १६ ॥ धर्मस्थितनि-
शानाथाच्छुभभुक्तौ पितुः सुखम् ॥ धर्मयज्ञं विवाहं च राज्यस्त्रीधनसंपदः ॥ १७ ॥ तथाविध-
निशानाथात्पापिनां तु हृतिर्यदा ॥ धर्महानिर्मनोदुःखं राज्यार्थगृहनाशनम् ॥ १८ ॥ कर्मस्थचं-
द्रदाये च सौम्यभुक्तिः करोति हि ॥ स्वकर्मनिरतं शास्त्रं धर्मदायपरायणम् ॥ १९ ॥ कर्मस्थि-
तनिशानाथात्पापभुक्तिर्यदा तदा ॥ कर्मनाशं करोत्यत्र अपकीर्तिं महद्भयम् ॥ २० ॥ लाभ-
चंद्रदशाभुक्तिर्धनधान्यांबराणि च ॥ वाहनं राज्यलाभं च करोति विविधं सुखम् ॥ २१ ॥
लाभचंद्रे पापभुक्तौ धननाशमुपैति च ॥ कृषिधान्याक्षिदेहार्तिं नृपचोरादिपीडनम् ॥ २२ ॥ ॥८५॥
द्वादशस्थनिशानाथपरिपाकेऽर्थनाशनम् ॥ पापभुक्तौ महत्कष्टं सर्वशत्रुत्वमेव च ॥ २३ ॥
शुभभुक्तौ व्ययस्थस्य वस्त्रमाल्यविभूषणम् ॥ दारार्थपुत्रमित्राणां वर्धनं वाहनं सुखम् ॥ २४ ॥

इति चंद्रदशायामंतर्दशाफलम् ॥ लग्नस्थितधरासूनोः परिपाके व्रणं क्षतम् ॥ पापभुक्तौ
महत्कष्टमजीर्णादिमहद्भयम् ॥ १ ॥ शुभभुक्तौ नृपात्प्रीतिं भ्रातृवर्गेशुभं सुखम् ॥ तथाविधध-
रासूनोर्दशायां क्षेत्रवाहनम् ॥ २ ॥ धनस्थितधरासूनोः शुभभुक्तिर्यदा तदा ॥ भ्रातृसौख्यं
मनोत्साहं विद्यावाहनभूषणम् ॥ ३ ॥ द्वितीयस्थधरासूनोः परिपाके शुभा हृतिः ॥ पूर्ववित्त-
विनाशं च राजकोपं ज्वराग्निभिः ॥ ४ ॥ तृतीयस्थधरासूनोः पपाभुक्तिर्यदा तदा ॥ मनोवैक-
ल्यमाप्नोति भ्रातृवर्गेविनाशनम् ॥ ५ ॥ तृतीयस्थधरासूनोः पाके सौम्यहृतिर्यदा ॥ भोजनां-
बरसौख्यं च कृषिभूषणवाहनम् ॥ ६ ॥ हिबुकस्थधरासूनोः क्रूरभुक्तौ महद्भयम् ॥ गृहक्षेत्रवि-
नाशं च नृपचोराग्निपीडनम् ॥ ७ ॥ हिबुकस्थधरासूनोः पाके सौम्यहृतिर्यदा ॥ क्षेत्रांबरसुखा-
वाप्तिं पशुवाहनभूषणम् ॥ ८ ॥ पंचमस्थधरासूनोः पाके पापहृतिर्यदा ॥ कृषिगोधनधान्यार्थ-
सुतदारविनाशनम् ॥ ९ ॥ तथाविधकुजात्सौम्यभुक्तौ शोभनमादिशेत् ॥ राजपूज्यं सुताप्तिं
च मंत्रावाप्तिमिहादिशेत् ॥ १० ॥ षष्ठस्थितकुजातपापभुक्तौ कष्टं विनिर्दिशेत् ॥ चोराग्निनृप-
पीडां च स्फोटकक्षयमेहनम् ॥ ११ ॥ तथाविधकुजात्सौम्यभुक्तौ भूपालमित्रताम् ॥ बंधुनाशं
मनोदुःखं पश्चात्सौख्यं विनिर्दिशेत् ॥ १२ ॥ कलत्रस्थकुजातपापभुक्तौ स्त्रीसुतराजभीः ॥

शुभभुक्तौ महत्सौख्यं नृपवाहनभूषणम् ॥ १३ ॥ अष्टमस्थकुजाद्भुक्तौ पापिनां मरणं कृशम् ॥
सौम्यभुक्तौ महत्सौख्यं कृषिगोनृपपूजनम् ॥ १४ ॥ नवमस्थधरासूनोर्दाये पापहृतिर्यदा ॥
पित्रोर्नाशं गुरोर्नाशं धर्महानिं मनोरुजम् ॥ १५ ॥ तथाविधकुजात्सौम्यभुक्तिर्गोधनसंपदः ॥
विवाहं यज्ञदीक्षां च देवभूसुरतर्पणम् ॥ १६ ॥ कर्मस्थितधरासूनोर्दुःखं स्यात्पापिनां हृतौ ॥
विदेशयानं दुष्कीर्तिं लभते हि पराजयम् ॥ १७ ॥ लाभस्थभूमिपुत्रस्य पाके पापहृतिर्यदा ॥
करोति विपुलं राज्यं गंधमाल्यविभूषणम् ॥ १८ ॥ शुक्रेज्याब्जविदां भुक्तौ लाभराशिगतस्य तु ॥
परिपाके महत्सौख्यं दानधर्मादिसंग्रहम् ॥ १९ ॥ द्वादशस्थधरासूनोः पाके पापहृतिर्यदा ॥
करोति दुःखबाहुल्यं कारागृहनिवेशनम् ॥ २० ॥ शुभापहारे सौख्यं च यानांबरविभूषणम् ॥
भुक्त्यंते राजकोपं च पदभ्रंशं मनोरुजम् ॥ २१ ॥ इति कुजांतर्दशा ॥ अथ राहुदशाया-
मंतर्दशाफलम् ॥ लग्नस्थसैंहिकेयस्य दाये पापहृतिर्यदा ॥ करोति दुःखबाहुल्यं नृपचोराग्नि-
पीडनम् ॥ १ ॥ तत्रस्थभोगिनः पाके शुभभुक्तौ सुखं वदेत् ॥ गृहक्षेत्रादिवृद्धिश्च भोजनां-
बरभूषणम् ॥ २ ॥ षडष्टांत्यगतस्याहेः परिपाके शुभेतरा ॥ हृतिः कलहरोगाग्निनृपचोरवि-
षारिभीः ॥ ३ ॥ श्वासक्षयप्रमेहादिशूलनिद्रादिभाग्भवेत् ॥ कुभोजनं कुवस्त्रं च स्थाननाशं

नृपाद्भयम् ॥ ४ ॥ दुःस्थस्य चाहिनाथस्य परिपाके शुभा हृतिः ॥ आदौ शुभं महत्सौख्यं
नृपमानं धनागमम् ॥ ५ ॥ अंते तु राजभीतिः स्यात् स्थानभ्रंशं मनोरुजम् ॥ कृषिगोभूमिव-
स्त्रादिबंधुपुत्रार्थनाशनम् ॥६॥ केंद्रत्रयस्थितस्याहेः पापिनां तु हृतिर्यदा ॥ गृहदाहाक्षिरोगादि-
दारपुत्रमहद्भयम् ॥ ७ ॥ स्थानच्युतिं मनोदुःखं निजाचारविवर्जितम् ॥ अकस्मात्कलहं चैव
चोराग्निनृपपीडनम् ॥ ८ ॥ चतुष्टयगतस्याहेः परिपाके शुभा हृतिः ॥ क्वचित्सौख्यं क्वचि-
त्कीर्तिं क्वचिद्धर्मं क्वचित्सुखम् ॥ ९ ॥ एवमादौ तु भुक्त्यंते राजकोपाद्धनक्षयम् ॥ युद्धे पराजयं
चैव विद्यावादं महद्भयम् ॥ १० ॥ त्रिकोणस्थफणींद्रस्य दशापाके महत्क्लशम् ॥ पापभुक्तौ
महत्कष्टं पापाचारसमन्वितम् ॥ ११ ॥ अपकीर्तिं कुभोज्यं च कृषिगोभूमिनाशनम् ॥ नृपभी
तिं च शौर्यं च मौल्यादिपतनं भवेत् ॥ १२ ॥ तथाविधफणींद्रस्य शुभभुक्तौ शुभक्रिया ॥
सुतदारधनाप्तिं च भुक्त्यंते फलमीदृशम् ॥ १३ ॥ किंचित्सुखं तदादौ तु विदेशगमनं तथा ॥
मंत्रोपास्ति मनोत्साहं कलत्रात्मजदूषणम् ॥ १४ ॥ तृतीयलाभगस्याहेः परिपाके महत्सुखम् ॥
पापभुक्तौ नृपप्रीतिं फलमीदृशमादितः ॥ १५ ॥ अंते कष्टं विनिर्दिष्टं चोराग्निनृपपीडनम् ॥
बंधुद्वेषं मनोदुःखं भ्रातृवर्गविनाशनम् ॥ १६ ॥ धनराशिगतस्याहेः पापानां तु हृतिर्यदा ॥

धननाशं मनोदुःखं भार्यापुत्रविनाशनम् ॥ १७ ॥ क्रयविक्रयवित्तार्त्तिं वाग्दूषणमथापि वा ॥
तथाविधफणींद्रस्य शुभभुक्तौ तु भोजनम् ॥ १८ ॥ वस्त्रवाहनभूषार्त्तिं क्रयविक्रयदूषणम् ॥
उद्योगभंगं देहार्त्तिं गूढपापं लभेन्नरः ॥ १९ ॥ इति राह्वंतर्दशा ॥ अथ जीवांतर्दशा ॥ केंद्रस्थि-
तस्य जीवस्य दशायां पापिनां हृतौ ॥ देहार्त्तिं लभते दुःखं राजकोपं धनक्षयम् ॥ १ ॥ कृषिगो-
भूमिनाशं च विरोधं बंधुभिः सह ॥ उत्साहभंगं वैकल्यमादौ चांते शुभं वदेत् ॥ २ ॥
भुक्तौ शुभानां तत्काले गुरोः केंद्रगतस्य तु ॥ राज्यलाभं मनोत्साहं वस्त्रवाहनभूषणम् ॥ ३ ॥
दानं होमं जपं धर्मं नृपलालनमानताम् ॥ सर्वोपकारकल्याणं विचित्रांबरकांचनम् ॥ ४ ॥
त्रिकोणस्थगुरोः पाके शुभभुक्तौ महत्सुखम् ॥ प्राकारगोपुरादीनां निर्माणं देवतर्पणम् ॥ ५ ॥
भाग्योत्तरं महाकीर्तिं दारपुत्रार्थसंग्रहम् ॥ विदेशयानादाप्तार्थं यशोविद्या जयं सुखम् ॥ ६ ॥
तत्र स्थितगुरोः पाके पापिनां च हृतिर्यदा ॥ दारपुत्रनृपक्रोधं बंधूनां मरणं तथा ॥ ७ ॥
बुद्धिभ्रंशं पदभ्रंशं कार्यविघ्नकरं तथा ॥ चोराग्निदाहपीडां च कुरुते नात्र संशयः ॥ ८ ॥
स्वकुलाचारहीनं च परदाराभिमर्शनम् ॥ चंचलं मानहानिं च मणिविद्रुमनाशनम् ॥ ९ ॥
षष्ठाष्टमव्ययस्थस्य गुरोः पाके शुभेतरा ॥ करोति स्वकुलाचारहीनं राज्यार्थनाशनम् ॥ १० ॥

आत्मार्थबंधुमरणं विदेशान्नृपलालनम् ॥ भूविवादं मनोदुःखं व्याधीनां भयमेव च ॥ ११ ॥
गुरोर्नांशं गतस्यापि परिपाके महत्सुखम् ॥ देशग्रामाधिपत्यं च शुभभुक्तौ महद्यशः ॥ १२ ॥
देहारोग्यकरं किंचिद्गजाश्वाद्यंबराणि च ॥ सुष्टुभोजनमुल्लासं क्षीरदध्याज्यशर्करा ॥ १३ ॥
तृतीयायगतस्यापि गुरोः पाके महद्यशः ॥ सौम्यानां भुक्तिकाले तु वस्त्रवाहनभूषणम् ॥ १४ ॥
मणिविद्रुममुक्तादिकांचनाद्यंबराणि च ॥ देशाधिपत्यं मंत्रित्वं लभते नात्र संशयः ॥ १५ ॥
तादृशस्य गुरोर्दाये पापभुक्तौ महद्भयम् ॥ आचारहीनं कुरुते स्वकुलोद्भवनाशनम् ॥ १६ ॥
विदेशवासं कष्टं च नानादुःखपरिभ्रमम् ॥ एवमादौ दशांते तु सुखवाहनभोजनम् ॥ १७ ॥
धर्मस्थितगुरोर्दाये शुभभुक्तौ धनागमम् ॥ विद्यालाभं जयं सौख्यं दारपुत्रनृपात्सुखम् ॥ १८ ॥
सर्वेषामुपकर्तृत्वं धनाधिक्यं महत् प्रियम् ॥ भोजनं पौष्टिकं चैव धर्मदारधनादिकम् ॥ १९ ॥
द्वितीयस्थगुरोः पाके पापभुक्तौ यदा तदा ॥ करोति दुःखबाहुल्यं राज्ञा हृतधनं तदा ॥ २० ॥
बंधुद्वेषं मनोद्विग्नं वाचिकं दैन्यमेव च ॥ कुभोजनादिदुष्कर्मकुत्सितप्रेष्यभावताम् ॥ २१ ॥
इति गुरोरंतर्दशा ॥ अथ शनेरंतर्दशा ॥ केंद्रस्थस्य शनेर्दाये यदा पापहृतिस्तदा ॥ स्थान-
च्युतिं प्रवासं च नृपचोराग्निपीडनम् ॥ १ ॥ तथाविधशनेर्दाये शुभभुक्तौ महत्सुखम् ॥ नृपा-

भिषेकमर्थार्त्तिं देशग्रामाधिपत्यताम् ॥ २ ॥ फलमीदृशमादौ तु भुक्त्यंते रोगपीडनम् ॥
परापवादं बंधूनां मरणं धननाशनम् ॥ ३ ॥ त्रिकोणस्थशनेर्दाये पितृपुत्रविनाशनम् ॥ पाप-
भुक्तौ महत्कष्टं कर्मनाशमथापि वा ॥ ४ ॥ वाताक्षिमूलरोगं च स्वबंधुकलहं तथा ॥ उद्योगभं-
गं दुःखं च स्थलधान्यविनाशनम् ॥ ५ ॥ तथाविधशनेर्दाये शुभभुक्तौ महत्सुखम् ॥ राजपूज्यं
कृषेर्लाभं धनधान्याभिवर्धनम् ॥ ६ ॥ स्वबंधुदारपुत्राणामारोग्यं भूषणादिकम् ॥ भृत्यमित्रार्थ-
संपात्तिं लभते धर्मसंग्रहम् ॥ ७ ॥ षष्ठाष्टमव्ययस्थस्य शनेर्दाये शुभेतरा ॥ हृतिर्दुःखं महत्कष्टं
स्थाननाशं धनक्षयम् ॥ ८ ॥ गुह्यरोगं विषार्त्तिं च ज्वरवह्निनृपाद्भयम् ॥ अत्याप्तबंधुमरणमुद्यो-
गस्य विनाशनम् ॥ ९ ॥ षष्ठाष्टमव्ययस्थस्य शुभपाके महत्सुखम् ॥ आरोग्यं कांतिवृद्धिं च
देशग्रामाधिपत्यताम् ॥ १० ॥ तृतीयलाभराशिस्थशनेः शुभहृतिर्यदा ॥ पाके शुभफलं प्रोक्तं
नृपलालनभूषणम् ॥ ११ ॥ तृतीयलाभराशिस्थशनेः पापहृतिर्यदा ॥ पाके धनार्त्तिं दुःखं च
भ्रातृवर्गविनाशनम् ॥ १२ ॥ विदेशयानं कलहं वैकल्यं भृत्यनाशनम् ॥ कुभोजनं परप्रेष्यं
कुस्त्रीसंगमनं लभेत् ॥ १३ ॥ धनस्थितशनेः पाके यदा पापहृतिर्भवेत् ॥ राजदंडं महाविघ्नं
कारागृहनिरोधनम् ॥ १४ ॥ उत्साहभंगं देहार्त्तिं ज्वरातीसारपीडनम् ॥ राज्यनाशं गवाश्वानां

मरणं वाहनाद्भयम् ॥ १५ ॥ द्वितीयस्थशनेः पाके शुभभुक्तौ मनो दृढम् ॥ उपकर्तृत्वमन्येषां द्यूतविद्याविनोदकम् ॥ १६ ॥ गानकेलिरहस्यं च भोजनांबरभूषणम् ॥ उद्योगसिद्धिं राज्याप्तिं मणिविद्रुमकांचनम् ॥ १७ ॥ इति शनेरंतर्दशा ॥ अथ बुधांतर्दशा ॥ केंद्रस्थितस्य सौम्यस्य दशायां पापिनां हृतौ ॥ कर्मविघ्नं महादुःखं मनश्चांचल्यमेव च ॥ १ ॥ उत्साहभंगं गोभूमिहिरण्यांबरनाशनम् ॥ स्थानच्युतिं महाद्वेषं विद्यानाशं लभेत्तदा ॥ २ ॥ शुभभुक्तौ बुधस्यापि पाके केंद्रगतस्य तु ॥ वैवाहिकं यज्ञकर्मदानधर्मजपादिकम् ॥३॥ ज्ञानाधिक्यं नृपा-त्प्रीतिं कृषिगोभूमिवर्धनम् ॥ मुक्तामणिप्रवालादिवाहनांबरभूषणम् ॥ ४ ॥ ज्ञस्य त्रिकोणयुक्त-स्य दशानां पापिनां हृतौ ॥ दारपुत्रार्थनाशं च कर्मनाशं मनोरुजम् ॥ ५ ॥ कृषिवाणिज्यना-शं च बंधुनाशमथापि वा ॥ पादभंगं महाद्वेषं बंधुद्वेषं लभेन्नरः ॥ ६ ॥ तथाविधज्ञस्य पाके शुभभुक्तौ नृपात्प्रियम् ॥ आरोग्यमतिसौख्यं च सोमपानादिकं सुखम् ॥ ७ ॥ स्वनामांकितप-द्यानि नामद्वयमथापि वा ॥ भोजनांबरभूषाप्तिं नरेशत्वं लभेन्नरः ॥ ८ ॥ षष्ठाष्टमगतज्ञस्य परिपाके तु पापिनाम् ॥ हृतौ चोरारिपीडां च ज्वरातीसारपीडनम् ॥ ९ ॥ स्वबंधुमरणं क्लेशं भृत्यस्त्रीपुत्रनाशनम् ॥ विवादं विग्रहं सर्वैर्बंधुभिर्लभते नरः ॥ १० ॥ तथाविधाब्जपुत्रस्य

शुभभुक्तौ महद्यशः ॥ आरोग्यं कांतिलाभं च देवभूसुरतर्पणम् ॥ ११ ॥ दशादौ फलमेवं स्याद्भुक्त्यंते सुरतर्पणम् ॥ गोमहिष्यादिपीडां च वाक्पारुष्यं नृपाद्भयम् ॥ १२ ॥ तृतीयायगतज्ञस्य शुभभुक्तौ शुभं भवेत् ॥ मनोधैर्यं मनोत्साहं विदेशाद् द्रव्यसंचयम् ॥ १३ ॥ विद्याजयं नृपात्प्रीतिं भोजनं पौष्टिकं तथा ॥ यज्ञवैवाहिकं कर्म पुराणश्रवणादिकम् ॥ १४ ॥ तथाविधज्ञस्य पाके पापभुक्तौ महद्भयम् ॥ भ्रातृवर्गविनाशं च वैकल्यं नृपपीडनम् ॥ १५ ॥ चोरारिवह्निभीतिं च कुस्त्रीभूतादिसेवनम् ॥ कर्महीनं कृषेर्नाशं गजाश्वानां च पीडनम् ॥ १६ ॥ धनस्थिताब्जपुत्रस्य परिपाके शुभेतरा ॥ करोति राजदंडं च बंधनं निगडं तथा ॥ १७ ॥ विषार्तिं बंधुविद्वेषं कृषिगोभूमिनाशनम् ॥ शत्रुत्वं सकलैः सार्धं नित्याचारविवर्जितम् ॥ १८ ॥ द्वितीयस्थस्य सौम्यस्य परिपाकेऽर्थलाभभाक् ॥ शुभभुक्तौ महाप्रीतिं देवभूसुरतर्पणम् ॥ १९ ॥ अध्वरादिमहत्कर्म दानहोमजपादिकम् ॥ बंधुपूज्यं महोत्साहं विद्यालाभं लभेन्नरः ॥ २० ॥ इति बुधांतर्दशाफलम् ॥ अथ केतोरंतर्दशा ॥ केतोश्चतुष्टयस्थस्य यदा पापहतिस्तदा ॥ मानभंगं महाद्वेषं नृपचोराग्निपीडनम् ॥ १ ॥ मातृनाशं तदीयं वा दारपुत्रविनाशनम् ॥ कर्मनाशं पादभ्रंशमकस्मात् कलहं वदेत् ॥ २ ॥ केतोस्तथाविधस्यापि शुभभुक्तौ नृपात्प्रियम् ॥ देहारोग्य-

करं सौख्यं बंधुभिश्च समागमम् ॥ ३ ॥ भोजनांबरभूषाप्तिमादौ चांते मनोरुजम् ॥ उद्योगभंगं कामार्तिं स्वकुलोद्भवनाशनम् ॥ ४ ॥ त्रिकोणराशियुक्तस्य केतोर्दाये शुभेतरा ॥ हृतिस्तदा मनस्तापं करोति विविधापदम् ॥ ५ ॥ पुत्रवर्गादिमरणं पित्रोर्नाशमथापि वा ॥ स्थानार्थयोस्तथायासं भृत्यबंधुविरोधनम् ॥ ६ ॥ शुभग्रहाणां केतोस्तु परिपाके हृतिर्यदा ॥ कृषिगोभूमिलाभं च विद्याबंधुसमागमम् ॥ ७ ॥ भोजनांबरसौख्यं च भुक्त्यादौ फलमीदृशम् ॥ भुक्त्यंते स्थानचलनमकस्मात् कलहं वदेत् ॥ ८ ॥ षष्ठाष्टमव्ययस्थस्य केतोर्दाये शुभेतरा ॥ हृतिः करोति मरणं विदेशं वा पदभ्रमम् ॥ ९ ॥ प्रमेहमूत्रगुल्मादिराजचोराग्निपीडनम् ॥ फलमादौ तदंते च यत्किंचित्सुखवर्धनम् ॥ १० ॥ भुक्तौ सौम्यग्रहाणां तु हृतौ स्त्रीपुत्रवर्धनम् ॥ धान्यांबरविभूषाप्ति मणिप्रवरकांचनम् ॥ ११ ॥ विप्रलंभं च शौर्यं च मौल्यादिपतनं तथा ॥ स्वबंधुजनशत्रुत्वं शिरोक्षिगुदपीडनम् ॥ १२ ॥ तृतीयलाभयुक्तस्य केतोः पाके परं सुखम् ॥ शुभभुक्तौ नृपात्प्रीतिं विचित्रांबरभूषणम् ॥ १३ ॥ वाहनं भूमिलाभं च गंधमाल्यानुलेपनम् ॥ दूरात्करागमं चैव स्वबंधुजनपूज्यताम् ॥ १४ ॥ पापभुक्तौ तथा जंतोः पापकर्म समाचरेत् ॥ सर्वेषां विघ्नकर्तृत्वं बंधुभिस्त्यक्तजीवनम् ॥ १५ ॥ परप्रेष्यं कुवस्त्रं च भुक्त्यादौ फलमीदृशम् ॥

भुक्त्यंते सुखमाप्नोति दारपुत्रधनागमम् ॥ १६ ॥ धनस्थितध्वजस्यपि परिपाके शुभेतरा ॥
करोति विविधं दुःखं भैक्ष्यमन्नं मनोरुजम् ॥ १७ ॥ पुत्रमित्रकलत्राणां नाशनं महदापदम् ॥
राज्ञा चौरेण वा वित्तं ह्रियते बंधुनाशनम् ॥ १८ ॥ शुभभुक्तौ धनाप्तिं च विद्यावादजयावहम् ॥
परोपकारं सर्वेषां भोजनांबरभूषणम् ॥ १९ ॥ भुक्त्यादौ फलमेवं स्यादंते किंचिद्धनव्ययम् ॥
वाक्पारुष्यं मनोद्विग्नं प्रवृत्तेर्भंगमेव वा ॥ २० ॥ इति केतोरंतर्दशा ॥ अथ शुक्रांतदशा ॥
केंद्रस्थितस्य शुक्रस्य सौम्यानां तु दृतिर्यदा ॥ राज्याप्तिं राजसन्मानं यानांबरविभूषणम् ॥१॥
उत्साहं कीर्त्तिसंपत्तिस्त्रीपुत्रधनसंपदः ॥ भाग्योत्तरं मनोधैर्यं राज्यद्वाराधिपत्यताम् ॥ २ ॥
तथाविधस्यवाच्छस्य पापभुक्तौ धनक्षयम् ॥ कुभोजनं कुवस्त्रं च शुभकर्मविनाशनम् ॥ ३ ॥
भुक्त्यादौ फलमेवं स्यादंते शोभनमादिशेत् ॥ कृषिगोभूमिलाभं च दूरदेशाद्धनागमम् ॥ ४ ॥
त्रिकोणस्थस्य शुक्रस्य शुभभुक्तौ शुभक्रिया ॥ देवभूसुरभक्तिश्च सुतदारविवर्धनम् ॥५॥ यज्ञादि-
कर्मलाभं च गोभूषणजयावहम् ॥ आरोग्यं देहकांतिं च चिंतितार्थमनोरथम् ॥ ६ ॥ तथाविधस्य
शुक्रस्य पापभुक्तौ मनोरुजम् ॥ अनारोग्यममर्यादं नृपचोरारिपीडनम् ॥ ७ ॥ कुस्त्रीसंगं कुवार्तां
च बंधुद्वेषं मतिभ्रमम् ॥ दुःस्वप्नं मौलिपतनमपकीर्तिं लभेन्नरः ॥ ८ ॥ पाके शुक्रस्य दुःस्थस्य

शुभभुक्तौ महद्यशः ॥ राजसन्मानमर्थाप्तिं पुत्रस्त्रीधनसंपदम् ॥ ९ ॥ वस्त्रवाहनभूषाप्तिमादौ चांते मनोरुजम् ॥ बंधुद्वेषं गुरोर्नाशं स्वकुलोद्भवनाशनम् ॥ १० ॥ शुभग्रहाणां भुक्तौ तु देहारोग्यं महत्सुखम् ॥ परान्नं पट्टवस्त्राप्तिं गंधमाल्यविभूषणम् ॥ ११ ॥ भुक्त्यादौ फलमेवं स्यादंते क्लेशकरं भवेत् ॥ चोरारिदेहपीडां च स्वबंधुजननाशनम् ॥ १२ ॥ तृतीयायस्थशुक्रस्य परिपाके शुभेतरा ॥ हृतिर्दुःखमवाप्नोति धनधान्यविनाशनम् ॥ १३ ॥ उद्योगभंगं क्लेशं च चोराग्निनृपपीडनम् ॥ भूविवादं स्वबंधूनां नाशनं स्वपदस्य च ॥ १४ ॥ तथाविधस्य शुक्रस्य शुभभुक्तौ महत्सुखम् ॥ नृपपूज्यं मनोधैर्यं देशग्रामाधिपत्यताम् ॥ १५ ॥ वाहनं भूषणाप्तिं च पुत्रस्त्रीभृत्यसंपदः ॥ कूपारामतटाकानां निर्माणं धर्मसंग्रहम् ॥ १६ ॥ धतस्थस्यापि शुक्रस्य शुभभुक्तौ महत्प्रियाम् ॥ दारपुत्रार्थलाभं च स्वबंधुजनरक्षणम् ॥ १७ ॥ विद्यार्जनं मनोल्लासं देवभूसुरतर्पणम् ॥ यज्ञादिकर्मलाभं च लभेन्नामद्वयं तथा ॥ १८ ॥ धनस्थितस्य शुक्रस्य पापभुक्तौ भृशं वदेत् ॥ राजदंडं मनोदुःखं हृद्रोगाक्षिप्रपीडनम् ॥ १९ ॥ विद्यावादं कृषेर्नाशं कर्महानिं पदभ्रमम् ॥ वह्निचोरारिभीतिं च लभते नात्र संशयः ॥ २० ॥ इति सर्वार्थचिंतामणौ षोडशोऽध्यायः ॥ १६ ॥

यद्यज्जन्मनि नक्षत्रे वृद्धिभावमुपेयुषि ॥ तस्य श्रीरायुरारोग्यं भवत्येवं विनिश्चयम् ॥ १ ॥
तिथ्यादिषु तथा वाच्यं क्षये तस्मिन् क्षयो भवेत् ॥ तिथिरेकगुणा प्रोक्ता ऋक्षं दशगुणं भवेत्
॥ २ ॥ लग्नं लक्षगुणं प्रोक्तं तत्समूहे फलादिकम् ॥ केंद्रस्थिता जन्मनि यस्य कस्य पापाश्च
सर्वे विफलप्रदाः स्युः ॥ ३ ॥ कुर्वंति दारिद्र्यमनेकदुःखं श्वासक्षयप्लीहगुदोदरार्तिम् ॥ ४ ॥
पापग्रहे कर्मगतेऽतिनीचे वक्रान्विते पापखगैः प्रदृष्टे ॥ नाशं कलत्रस्य वदंति नूनं मुनीश्वरास्त-
द्वदनेकशास्त्रैः ॥ ५ ॥ दुःखी मूढो लोकविद्वेषकारी काणः पंगुर्निर्धनो मानहीनः ॥ अल्पायुः
स्यात्केंद्रगाः पापखेटा ब्रह्मद्वेषी चापकीर्तिश्च सर्वे ॥ ६ ॥ शंकराचार्यस्तु ॥ लग्ने माने सप्तमे
चाथ बंधो पापाः खेटा जन्मकाले तु सर्वे ॥ तिष्ठंत्येते स्वल्पमायुष्प्रमाणं तेषामेको लग्नपो वा
यदि स्यात् ॥ ७ ॥ तथापि तद्योगफलप्रमाणं तादृग्विधं स्यान्मुनयो वदंति ॥ स्वनीचभागादि-
महीपयोगेऽप्येवं फलं दुःखितनिर्गतायुः ॥ ८ ॥ तथा स्थिते जन्मनि यस्य कस्य बाल्ये च पि-
त्रोर्मरणं च कष्टम् ॥ भिक्षाशनेनाप्युदरस्य पूर्तिस्तदा भवत्येव तदंगहीनम् ॥ ९ ॥ स्वनीच-
भागादिमहीपयोगे जातेऽपि यस्यापि नरस्य कस्य ॥ केंद्रत्रिकोणेषु शुभो यदि स्यात्तद्राजयो-
गं सफलं वदंति ॥ १० ॥ स्वेशेक्षिते लग्नगते शुभांशे जीवेन दृष्टे धनराशिपेन ॥ स्वनीचभागा-

दिमहीपयोगे जातोऽपि भूमेरधिपत्यमेति ॥ ११ ॥ एवं चिंतामणौ प्रोक्तं वेङ्कटेशेन धीमता ॥ नीचभागादियोगार्थराजयोगादिजं फलम् ॥ १२ ॥ अथ द्रेष्काणः ॥ मेषद्वितीयः खगद्रेष्काणः ॥ मिथुनद्वितीयः खगद्रेष्काणः ॥ अथ कर्कद्वितीयः ॥ कर्कतृतीयोपि व्याल एव ॥ सिंहप्रथमः खगद्रेष्काणः ॥ वृश्चिकप्रथमद्वितीयौ व्यालद्रेष्काणौ ॥ वृश्चिकतृतीयो व्यालः ॥ अथ मकरप्रथमो निगडद्रेष्काणः ॥ मीनतृतीयो व्यालद्रेष्काणः ॥ रविभौमार्कजाः शुष्काः सजलौ चंद्रभार्गवौ ॥ बुधवाचस्पती ज्ञेयौ सजलौ जलराशिगौ ॥ १ ॥ कुंभकर्कटकौ मीनमकरालितुलाधराः ॥ सजला राशयः प्रोक्ता निर्जलाः शेषराशयः ॥ इति सर्वार्थचिंतामणिः समाप्तः ॥ ॥ जन्मन्यर्को हिमकरसुतः सैंहिकेयो सुरेज्यो केतुश्चंद्रो दिनकरसुतो भार्गवो भूमिपुत्रः ॥ तापं कांतिं क्षतिधृतिलयं कीर्तिहानिं प्रमोदं मृत्युं ताराबलमनुदिनं संचरंति क्रमेण ॥ १ ॥ ग्रहाणां परस्परं स्थानवशेन बाधकत्वमाह ॥ क्रमाच्चरागद्विशरीरभाजामुपांत्य ११ धर्म ९ स्मर ७ गास्तदीशाः ॥ खरांशुमांदिस्थितराशिनाथा अतीव बाधाकरखेचराः स्युः ॥ २ ॥ द्युमणि १ रमरमंत्री २ भूसुतः ३ सोमसौम्यौ ४ गुरु ५ रिनतनयारौ ६ भार्गवो ७ भानुपुत्रः ८ ॥ दिनकरदिविजेज्यौ ९ जीवभानुज्ञमंदाः १० सुरगुरु ११ रिनसूनुः १२ कारकाख्या विलग्नात् ॥ ३ ॥

॥ अथ ग्रहाणां विशेषकारकत्वमाह ॥ पितृप्रतापारोग्यमनःशुचिरुचिज्ञानोदयकारकः सूर्यः ॥ १ ॥ धवलचामरयशोदयामोदकांतिमुखलावण्यमातृमनप्रसादकारकश्चंद्रः ॥ २ ॥ पराक्रमविजयविख्यातिसंग्रामसाहससेनापत्यदंडनेतृत्वखड्गपरश्वधकुंतकुठारशतघ्नीभिंदिपालधनुर्वीणानैपुण्यधृतिगांभीर्यकामक्रोधशत्रुवृद्धिआग्रहावग्रहपरापवादस्वतंत्रधातृभूकारकः कुजः ॥ ३ ॥ संततिशांतिविनयभक्तिमतिमातुलबांधवज्ञातिगोत्रसमृद्धिगणितप्रज्ञावेदांतविद्याकारको बुधः ॥ ४ ॥ वाग्धोरणीमंत्रराजतंत्रनैष्ठिकगजतुरंगयाननिगमावबोधकर्मपुत्रसंपज्जीवनोपायकर्मयोगसिंहासनकारको गुरुः ॥ ५ ॥ संगीतसाहित्यहास्यरसाद्भुतमदनयुवतिरतिकेलिविलासविचित्रचित्रकांतिसौंदर्ययुवतिराजवशीकरणराजमुखवशीकरणगारुडेंद्रजालमालावैशद्यमहदणिमाद्यष्टैश्वर्यकाव्यकलासमभोगकलत्रकारकः शुक्रः ॥ ६ ॥ लोभमोहविषमपरपीडानिर्घातनैष्ठुर्यदुर्मतिदारिद्र्यदुर्दशामयवातवंचनमहिषीयवागूकृष्णधान्यायुष्यजीवनोपायकारकः शनिः ॥ ७ ॥ यशः प्रतिष्ठाछत्रकारको राहुः ॥ ८ ॥ इति स० सू० समाप्तः ॥

इदं पुस्तकं श्रीकृष्णदासात्मज-गङ्गाविष्णुना स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशितम्। शके १८२८, संवत् १९६३.

## भुवनदीपक-संस्कृत टीका तथा भाषाटीकासहित.

( प्रश्नग्रन्थ ) अखिल सज्जन संस्कृत तथा हिन्दी रसज्ञ सर्वसाधारण महाशयोंसे सूचना है, कि यह भुवनदीपक ग्रन्थ ऐसा अद्भुत है कि जिसमें नाना प्रकारके प्रश्न और कुंडली आदिकके फल कहनेका विधान और अनेक ज्योतिषकी संकीर्ण गुप्तवार्त्ता जिनकी कि आज समय बहुधा परिपाटी है । इस रीतिसे प्रक्षिप्त है कि थोडेहीमें बहुत जाना जाता है । तथापि इसपर भाषान्तर न होनेके हेतु अनेक प्रियवर हमारे इसके यथार्थ भावसे निराश होकर भारत वर्षमें मौन हो रहे थे. इस कारण ढाडोलि ग्रामस्थ श्रीयुत पण्डितवर्य काशिरामने मेरी सूचनानुसार इसपर ऐसी सरल हिन्दी भाषा बनाई है कि पदपदका अर्थ दीपकवत् प्रकाशित कर दिया है और जो विषय इसमें नहीं है वहभी टिप्पणीद्वारा प्रकट कर दिया है. कारण कि ज्योतिषशास्त्रके अल्पतमाभ्यासी तथा थोडे पढे हुओंकोभी सरल रीतिसे ग्रन्थानुभव हो जावे. की. ८ आ.

पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास,

"लक्ष्मीवेंकटेश्वर" छापाखाना, कल्याण-मुंबई.